ज्वलत्प्रतापानलतापितारिणा
रणाजिरे कार्म्मुकबाणधारिणा ।
विधाय विध्वंसमशेषविद्विषां
लघूकृता तेन मही महीयसी ॥ ४ ॥

विशीर्णसौधत्रुटदृट्टगोपुरैः
पुरैः परीता द्विषतामनेकशः ।
गुणानुरागादिव सागराम्बरा
जगज्जयं तस्य शशंस सर्वतः ॥ ५ ॥

हरेरुरःपीठमिवाब्धिनन्दिनी
तुषारधामानमिवामला द्युतिः ।
महेशदेहार्द्धमिवाम्बिकानिशं
तमंघ्रिवृक्षैः सकला समन्वगात् ॥ ६ ॥

उदग्रबाणव्रजदीर्णविद्विषत्-
करीन्द्रकुम्भच्युतचारुमौक्तिकैः ।
स्वकीर्त्तिवल्लीस्फुटबीजसन्निभै-
रवाकिरत् सङ्गरभूमिमच्युतः ॥ ७ ॥

विलोचनान्तःस्रवदस्रबिन्दुभि-
र्विशालमुक्ताफलसन्निभैः सदा ।
निवेशितास्तेन रणे जितारिणा
विपक्षनारीगणवक्षसि स्रजः ॥ ८ ॥

अशेषदेशोक्तिविशेषकोविदै-
रलक्ष्यवेषैः परितः प्रसारिभिः ।
विवेद विद्वान् स हि नीतिसंश्रये
चरैरुदारैश्चरितानि विद्विषाम् ॥ ९ ॥

नयेन लोकान् विनयेन बान्धवान्
परान् प्रतापेन धनेन याचकान् ।
गुरून् प्रणत्या महसा जगत्त्रयीं
वशीचकाराशु स शीलवान् हरिः ॥ १० ॥

न दूषणं भूषणतामुपागतं
न भूषणं दूषणबुद्धिमादधे ।
सुते रिपौ वापि विचारचातुरी-
धुरीणचित्तस्य च तस्य कर्हिचित् ॥ ११ ॥

कुमुद्वतीशेन निशेव शारदी
सुरद्रुमेणेन्द्रपुरीव निर्मला ।
दरीव पारीन्द्रवरेण निर्भरं
विभूषिता तेन बभूव मेदिनी ॥ १२ ॥

तमालनीलद्युतिरम्बुजेक्षणो
मनोविनोदं जनयंश्च पश्यताम् ।
अमन्दमानन्द इवैष मूर्त्तिमा-
नमानि दृग्वर्त्मगतो हिताहितैः ॥ १३ ॥

सुधेव दुग्धा हिमधामबिम्बतो
नदीव पुण्या गिरिराजकन्दरात् ।
तदाननान्निर्गलिता सरस्वती
विनोदयामास न कस्य मानसम् ॥ १४ ॥

उरःकवाटं किल कैटभद्विषो
रमावलम्बे चपलापि निश्चला ।
चिरं सरस्वत्यपि तज्जिगीषया
बभूव तत्कण्ठतटीकृतास्पदा ॥ १५ ॥

विलोक्य तद्बाहुयुगं विलज्जितो
भुजङ्गराजः प्रययौ रसातलम् ।
ततः कदाप्येष न सन्निवर्त्तते
चिरानुबन्धा हि महात्मनां ह्रियः ॥ १६ ॥

अनेकसौन्दर्यविशेषशोभिनो
जितस्तदूरुद्वितयस्य कान्तिभिः ।
गजाधिराजः सुचिरं विनिःश्वसन्
बिभर्त्ति सङ्कोचकदर्थितं करम् ॥ १७

समुद्यदुद्दामरुचो दिवानिशं
तदङ्घ्रियुग्मस्य नखेन्दुमालिनः ।
हिमाभिभाव्येन दिवाविकाशिना
सरोरुहेणोपमितिर्विडम्बनम् ॥ १८ ॥

अनन्तसामन्तशिरोमणिस्फुरत्-
प्रभाभरोद्भासि पदद्वयं हरेः ।
सरोजिनीनायकरोचिरुज्ज्वलं
विलङ्घयामास विनिद्रमम्बुजम् ॥ १९ ॥

बभूव तस्यातिमनोविनोदिनी
नदीप्रियाङ्के नगरी गरीयसी ।
अशेषभूमण्डलमौलिमण्डनं
धरस्थितिर्द्वारवतीति विश्रुता ॥ २० ॥

सदाशिवावस्थितिसौख्यशालिनी
कुमारसञ्चारविराजितद्युतिः ।
मुदा सदानन्दिगणैर्विभूषिता
पुरी पुरारेरिव या बभौ भुवि ॥ २१ ॥

शिरःस्फुरत्काञ्चनसिंहतोरणा
नियन्त्रिता तीक्ष्णकृपाणपाणिभिः ।
कनत्स्तनोनीद्रसमुद्रमेखला
श्रिया हसन्तीव पुरं सुरेशितुः ॥ २२ ॥

विचित्रचामीकरदण्डकल्पितै-
र्ज्वलत्प्रतापैरिव शार्ङ्गधन्वनः ।
विराजमानैर्वरणैः समावृता
चिरादृशीया किल या सुरैरपि ॥ २३ ॥

अगस्त्यौभूषणतामुपागतां
विधातुमुत्को भुवि यां सरोजभूः ।
चकार पूर्वं निजशिल्पकल्पना-
विलोकनायैव महेन्द्रपत्तनम् ॥ २४ ॥

क्षितेर्विभूषा भुवनस्य सम्पदां
निधानमुद्दामनिकेतनं श्रियः ।
यशो नवं शिल्पकलासु वेधसो
विलोक्य यामित्यममानि मानवैः ॥ २५ ॥

पुरा मुरारेरवमंवरोऽम्बुधि-
र्विभाव्य रत्नाकरतामिवात्मनः ।
प्रवालमुक्ताफलरत्नराशिभिः
प्रसाधयामास च यां प्रयत्नतः ॥ २६ ॥

नवाम्बुदश्यामतनुं मनोहरं
हरिं मुहुर्द्रष्टुमनोभिरादरात् ।
यदङ्गनाथ्याजमुपेत्य सम्पदा-
दचञ्चलत्वञ्चपलाभिरर्जितम् ॥ २७ ॥

समुल्लसल्लोचनचारुषट्पदाः
पदारविन्दाश्रितचित्रहंसकाः ।
श्रियं दधुः केशकलापशैवलाः
सरोजिनीनामपि यत्मृगीदृशः ॥ २८ ॥

कुतूहलं तत्र बभूव कुत्रचिद्
यदाविरासीन्नहि यत्र नित्यशः ।
न सन्ददृस्ता जगतीतलेऽभवन्
विलोकिताश्चैव न या गृहे गृहे ॥ २८ ॥

यदन्तरङ्कासितसौधमण्डली-
विलोकनान्मुग्धमना मुहुर्मुहुः ।
वसन्नपि श्रीमति चन्द्रमण्डले
कलङ्करङ्कुर्न दधौ स्थिरां धियम् ॥ ३० ॥

समुल्लसत्फेनसमानकान्तिभि-
स्तरङ्गितैर्धीरसमीरसङ्गमात् ।
ध्वजापि यत्रोपरिविश्रमकेतनैः
सुरापगातुङ्गतरङ्गभङ्गिमा ॥ ३१ ॥

रराज यस्यां कलधौतमञ्जरी-
परिष्कृताट्टालकराजिरुज्ज्वला ।
परिस्फुरत्काञ्चनवल्लिमेखला
धराधरेन्द्रस्य शिशोस्तनूरिव ॥ ३२ ॥

हरिन्मणिस्तम्भसहस्रकैतवात्
फणाभिरुच्चैः कलितेन पन्नगैः ।
सरोजरागोज्ज्वलशिल्पशालिना
ललास नासापटलेन या मुहुः ॥ ३३ ॥

समन्ततो हारशिरोविलम्बिता-
द्विधाकृताः शुभ्रदुकूलकल्पिताः ।
समुद्वहन्ती जवनीः स्फुटोपमा-
भुजङ्गराजाङ्गविमुक्तकञ्चुकैः ॥ ३४ ॥

यदन्तरुद्यन्मणिमूर्त्तिसंहतिः
करस्फुरद्रत्नसहस्रदीपिका ।
तिरस्कृतार्कांशुचया चयैस्त्विषां
तडित्ततिर्मूर्त्तिमतीव निर्व्विये ॥ ३५ ॥

हरिन्मणिश्यामलमन्दिरोदरे
मृदङ्गघोरध्वनिभिर्विबोधितैः ।
सदैव यत्राविरकारि कौतुका-
च्छिखण्डिभिस्ताण्डवडम्बरोत्सवः ॥ ३६ ॥

मनोज्ञमाणिक्यकदम्बकल्पिता-
ननल्पशिल्पान् निलयाननेकशः ।
विलोकयन्तोऽधिविभातमुद्गतं
निनिन्दुरिन्दीवरबान्धवं न के ॥ ३७ ॥

समन्ततः स्फाटिकहर्म्यभित्तिषु
प्रतीयमानप्रतिबिम्बसम्पदम् ।
नितम्बिनीं स्वामपि केलिकौतुकी
विवेद विद्वानपि यत्र न प्रियः ॥ ३८ ॥

यदिन्द्रनीलामलमन्दिराजिरे
विराजमाना वरकाञ्चनत्विषः ।
विडम्बयामासुरजस्रमङ्गना
घनाघनासक्ततडिल्लताश्रमम् ॥ ३९ ॥

समुल्लसत्काञ्चनदीपधोरधः
परिस्फुरद्विद्रुमभित्तिमाश्रिता ।
श्रयोभनालेख्यकलापकैतवात्
किरीटिनी वारुणलोकसन्ततिः ॥ ४० ॥

सुखोषिताः काञ्चनपिञ्जरे शुका
मुदा जगुर्यत्र हरेर्यशःस्तुतीः ।
गृहीतवर्णस्वरभेदकौशलाः
सरस्वतीसद्मनि सामगा इव ॥ ४१ ॥

सुरम्यसोपानपरम्परापुरः
प्रशस्तशोणायनमध्यमास्थिता ।
सदा यतश्रीश्मनुजानमूमुह-
न्महासुखीव स्थिरशोणपूरगा ॥ ४२ ॥

सुवर्णजस्तम्भनिषण्णविग्रह-
स्फुरन्मुखीत्थं चलयन्त्वमर्चितम् ।
प्रपश्यतां यत्र सुचारुकारवा-
द्वनीजनञ्जीवनमानवभ्रमम् ॥ ४३ ॥

समन्ततो लोहितकान्तिवीथिका
क्वचिद् द्रुमस्निग्धितमुग्धनायिका।
इतस्ततः कृत्रिमकुञ्जवेदिका
पुरः पुरोऽराजत पुष्पवाटिका ॥ ४४

सिताश्मसोपानशतेन सङ्गतै-
र्विराविते: सारसहंसकूजनै:।
सरोरुहोल्लासितचारुवारिभि:
सरोवरैर्भूरितरैर्विभूषिता ॥ ४५ ॥

अतिस्फुटस्फाटिककुट्टिमोपरि
प्रकामविन्यस्तसमस्तवस्तुभि:।
यदापणैश्चेतसि मौक्तिकार्थिना-
मकारि काचैरपि मौक्तिकभ्रम: ॥ ४६ ॥

वणिग्वधूनां मधुराधरस्फुर-
न्मनोरमान्त:स्मितभाषितादिषु।
नितान्तमुत्कण्ठितचित्तवृत्तयो-
विदुर्जना यत्र न कृत्यमात्मन: ॥ ४७ ॥

महार्घमहार्घ्यानभिरूपरूपकान्
मणीननेकान् विनिधाय संस्थितान्।
विलोकयन्तो वणिजो यदापणे
जना धनाधीश्वरतोऽप्यमूहिरे ॥ ४८ ॥

जनैरवद्वातकवाटमुद्रणे-
र्निशामुखे यत्र सुखादसुप्यत।
गवाक्षमार्गैरविशत् क्षपापतेः
करः शनैश्छिद्रपथैरिव तस्करः॥ ४९॥

सुधोदयप्राज्यनवाज्यसौरभै-
र्वरट्टसंघट्टनघोषणैरपि।
सुधान्धसामध्वनिरुद्धचेतसां
यया च विश्वासितमास मानसम्॥ ५०॥

वसन् स तस्यां पुरि पार्वतीपति-
प्रभः प्रभावातिशयैर्महायशाः।
निहत्य दैत्यान् लघयन् धराभरा-
नकल्पयद्देवकुलं निराकुलम्॥ ५१॥

प्रसह्य भूपालगणान् रणाङ्गने
विजित्य दैत्यानिव विष्टरश्रवाः।
अवाप पूर्णेन्दुमुखीं प्रियामसौ
विदर्भभामम्बुधिनन्दिनीमिव॥ ५२॥

श्रियेव विष्णुः शिवयेव शङ्करः
पतिः पुलोमात्मजयेव नाकिनाम्।
समं तया केलिकलासु कौतुकी
मनोऽनुकूलानि सुखानि सोऽन्वभूत्॥ ५३॥

मनस्विनीमम्बुजमञ्जुलोचनां
शरत्सुधादीधितिसोदराननाम्।
सुखेन सत्राजितराजनन्दिनी-
मथोपयेमे जगतामधीश्वरः॥ ५४॥

परस्परालोकनकेलिकौतुके
निमेषलेशोऽभ्युदियाय यस्तयोः।
अनल्पकल्पायितत्तत्क्षणस्तदा
ततोऽपि ताभ्यां विरहोऽन्वभूयत॥ ५५॥

अथारविन्दाक्षमुखेन्दुमौचितं
समुत्सुकान्तःकरणेन निर्भरम्।
चकोरवत् सञ्चरता मरुत्पथे
सुरर्षिणा प्रापि पुरी सुरद्विषः॥ ५६॥

प्रदीप्तचामीकरचारुदीप्तिभि-
र्जटाकलापैः सुतरां समुज्ज्वलः।
समुच्छलद्भिः परितः शिखाशतैः
शुभः शिखावानिव शान्तदर्शनः॥ ५७॥

उदारमूर्त्तिर्विशदावलोकनैः
प्रमोदमालोकयतां प्रचारयन्।
रराज राजीवविशाललोचनो
महानसौ धर्म्म इवात्तविग्रहः॥ ५८॥

अरोचताच्छस्फटिकाक्षमालिका
तदा मदत्याः श्रवणावलम्बिनी ।
विशुद्धमङ्जप्रमुखस्वरांशक-
श्रुतिस्तुतिर्मूर्त्तिमतीव यद्वया ॥ ५८ ॥

स्फुरज्जटाजूटमयिः सितद्युति-
र्लवेषु शीर्षं शनकैर्विधूनयन् ।
हिमस्थलोद्भूतविधूतवह्निना
दधार साम्यं शिरसा गिरीशितुः ॥ ६० ॥

अमुं समाकर्ण्य निकेतमागतं
सुतं विधेः सत्वरमुत्कमानसः ।
तदोदतिष्ठद्वरकाञ्चनासनान्
मुदा मुकुन्दो विनयान् सतार्थयन् ॥ ६१ ॥

ससम्भ्रमं भूरितराणि भक्तितः
पदानि गत्वातिजवेन यादवः ।
स दण्डवत् तस्य पपात पादयो-
र्गुरौ प्रणामो हि शिवाय कल्पते ॥ ६२ ॥

सुरारिमुत्थाप्य करेण सादरं
विधाय वेदोदितमङ्गलाशिषः ।
निमज्जयन् मोदमहोदधौ वपु-
र्भुजोपपीडं परिषस्वजे मुनिः ॥ ६३ ॥

प्रमोदवाष्पप्रतिरुद्धभाषितो
दरस्मितोद्भासिमुखेन्दुरध्वनः ।
स तं प्रतीहार इव स्वयं दिशन्
प्रवेशयामास निवेशमात्मनः ॥ ६४ ॥

अनन्तसन्तापनिवृत्तिकारकं
सुमङ्गलानामिव केलिमन्दिरम् ।
फणीव निर्मुक्तराघकञ्चुको
मुनिर्मुदागादधिमध्यमण्डपम् ॥ ६५ ॥

समं महिष्या तरसाथ शौरिणा
स्वयं समानीय तदा निवेदिते ।
सुखोपविष्टो वरकाञ्चनासने
रराज भूपेव स मेरुमूर्द्धनि ॥ ६६ ॥

सुधांशुकान्तप्रतिमैरभीषुभिः
श्यामैश्च नीलाम्बुजगर्भसन्निभैः ।
तयोर्मिथः सम्बलितं सदस्तलं
सितासितद्योतमदः समासदत् ॥ ६७ ॥

पुरः स्थितोऽस्याजिनिनः सितद्युतेः
स पीतवासा दलिताञ्जनच्छविः ।
नवोदितैणाङ्कसुमेरुशीर्षका-
दधस्तडित्वानिव तिलिपे तदा ॥ ६८ ॥

प्रगुण्य पाद्यादिभिरध्वनः श्रमा-
न्निनाय पुण्यमथानुयुज्य च ।
वरातिथेयो मधुपर्कपूर्वकं
महर्षये गामपि स न्यवेदयत् ॥ ६९ ॥

सुधाभिरामस्मितभासितानन:
समुल्लसद्दास्यकलाविलक्षणः ।
प्रमोदयन् मानसमञ्जसा मुने-
र्मुदा तदानीमिदमाह माधवः ॥ ७० ॥

भवाम्बुधौ घोरतरे निमज्जता-
मिदं जगत्यामवलम्बनं महत् ।
महामुने ! यद्भवनेषु मज्जति
भवत्पदाम्भोजरजोऽपि किञ्चन ॥ ७१ ॥

भवन्तु सर्वार्थकृतार्थताश्रयौ:
कृतस्त्वयोदारदयानिधे ! चिरात् ।
सुरेन्द्रवन्द्याङ्घ्रिसरोरुहो भवान्
यदागतो मत्परतोऽपि मद्गृहान् ॥ ७२

समुज्झितोऽखिलसमस्तसम्पदा-
मुदारयोगोद्यदस्तचेतसाम् ।
भवादृशां दर्शनमेव दुर्लभं
समागमे नाथ ! मनोरथः कुतः ॥ ७३ ॥

ममार्ज्जितायाः किल कोटिजन्मभि-
श्चिरादसाधारणपुण्यसम्पदः।
असौ भवद्दर्शनसिद्धिसाधकः
परः परीपाकविधिर्विजृम्भते ॥ ७४ ॥

भवादृशां ब्रह्मनिमग्नचेतसा-
मसारवज्ञाति जगत्त्रयी सदा।
तथापि चापल्यवशात् त्वदागम-
प्रयोजनापेक्षि मदीयमानसम् ॥ ७५ ॥

श्रीवासुदेवविलसद्वदनारविन्द-
सानन्दभाषितसुधारसधोरणीषु।
निःस्यन्दतामुपगतेन हृदा तदानीं
लेभे मधुव्रततुला द्रुहिणात्मजेन ॥ ७६ ॥

वदति विनयपूर्वं केशवे भक्तियोगाद्-
यदभवदतिमुग्धो नारदो नात्र चित्रम्।
द्रवदमृतमुदारं सादरं वर्षतीन्दौ
भजति किमु कदाचित् कामचारं चकोरः ॥ ७७ ॥

इति वासुदेवविजये महाकाव्ये नारदागमनो
नाम प्रथमः सर्गः।

---

## द्वितीयः सर्गः ।



यथावदातेन विलोकितेन
स्मितेन पीयूषमहोदरेण ।
प्रकाशयन् शान्तमिवात्मरत्नै-
र्गिरं गभीरामवदन्महर्षिः ॥ १ ॥

तदोपमन्त्या शरदन्तकान्त्या
विराजमानं वदनं महर्षेः ।
जहार श्रोतांशुनवांशुजालै-
रनन्धुरन्तारसरोजलक्ष्मीम् ॥ २ ॥

विधिप्रधानैरपि नाकनाथै-
र्निषेव्यते यच्चरणारविन्दम् ।
सोऽपि त्वमस्मासु तनोषि भक्तिं
न वेद वेदोऽपि तवेश ! भावम् ॥ ३ ॥

भवत्पदाम्भोरुहवीक्षणाय
सदा मनो यन्मम जातमुत्कम् ।
मुखेन तेनैव मुकुन्द ! मन्ये
धन्यं त्वदालोकनमुक्तिरीति ॥ ४ ॥

न ते जगन्मङ्गलमङ्गलस्य
कृत्यं लघोयोऽपि समागमे मे ।
मया तु युष्मच्चरणारविन्द-
विलोकमानव्यमवापि भव्यम् ॥ ५ ॥

पुरः सुरेशस्य वराप्सरोभि-
र्गीते भवत्कीर्त्तितुषाररश्मौ ।
चिरं चकोरायितचित्तहर्त्ते-
र्ममाभवद् भूरितरः प्रमोदः ॥ ६ ॥

लोकेश ! लोकेषु शिवादिकाना-
माकर्णते तावककीर्त्तिरेव ।
इयन्तु धन्या धरणी यदेना-
मलङ्करोषि स्वपदार्पणेन ॥ ७ ॥

वर्षत्युपेन्द्र ! त्वयि दानधाराः
संश्रेरते के न सुरद्रुमत्वम् ।
छायार्थमेव त्रिदशाङ्गनाभि-
रुपास्यते केलिकुतूहलैः सः ॥ ८ ॥

निःशेषिताशेषसुरारिवर्गं
सगर्वगीर्वाणगणैरुदयम् ।
विदूरिताधर्ममुदीर्णधर्मं
जगत् त्वयाकारि सता कृतार्थम् ॥ ९ ॥

मध्येसभं सादरमप्सरोभिः
स्फीतेषु गीतेषु भवद्यशःसु ।
अवाप यं श्यामलिमानमिन्दुः
स एव जातो विकलः कलङ्कः ॥ १० ॥

धृतायुधः स्यन्दनमिन्दुशोभं
यदा समारोहसि हर्षतोऽपि ।
तदैव वृन्दारकवृन्दबालाः
सृजन्ति कल्पद्रुमपुष्पमालाः ॥ ११ ॥

चिराय रिक्तेऽपि पुरे रिपूणां
तवौषधीभिर्ज्वलिताभिरुच्चैः ।
सभागृहा दीप्तवहद्दीपाः
पुरेव राजन्ति निशासु नित्यम् ॥ १२ ॥

दयाननाद्यानपि दुष्टचित्तान्
निहत्य दैत्यान् स्वभुजप्रतापैः ।
सुरश्रियं नौषमिवाम्बुमग्नां
भवान् कदा न स्वयमुज्जहार ॥ १३ ॥

मुहुर् मुहुर् दैत्यचमूसमूहै-
र्मन्दीकृतानां सुरसुन्दरीणाम् ।
विलोचनस्य पयदश्रुधारा
भुवो विलासस्य हेतुरासीत् ॥ १४ ॥

परोपकारैकपरायणेन
नारायणेनाखिललोकधात्रा।
मग्नो विपद्वारिनिधावगाधे
त्वयोद्धृतः कृष्ण! कदा न जिष्णुः॥१५॥

जगज्जगन्नाथ! समस्तमेव
करारविन्दे बदरायितं ते।
तथापि यत् पृच्छसि मामुदन्तं
हेतोरतो मोहमयं वदामि॥१६॥

प्रयुज्य योगानपि जातु योगी
निरीक्षते यन्न जनुःसहस्रैः।
तदद्दृश्यते ते चरणारविन्द-
मितः परं किं किल भाग्यमास्ते॥१७॥

अथापरं किञ्चन कौतुकाय
निवेदयाम्यद्य यदेव दृष्टम्।
कथावतारेषु पुरः प्रभूणां
जल्पो न कल्पेत हि दूषणाय॥१८॥

पुरानुरागेण भवान् सुराणां
हिंसारसेनापि दितेः सुतानाम्।
ममन्थ मन्थाचलदण्डधारी
सर्वोपकारी किल दुग्धसिन्धुम्॥१९॥

तदाविरासन् मथितात् पयोधेः
सुधासुधादीधितिकौस्तुभाद्याः ॥
तयोद्गतः कश्चन तद्वराजः
क्वापि नास्ते खलु यत्सदृक्षः ॥ २० ॥

पुरः स्थिते त्वय्यपि विश्वपूज्ये
तं देवराजस्तरसा निनाय ।
समीहितावाप्तिषु लोभभाजा-
मालम्बते जातु न हृद् विचारम् ॥ २१ ॥

अशेषशाखोन्नतपल्लवश्रीः
सदा समुल्लासिघनप्रसूनः ।
स एक एव द्युसदामिदानीं
पुरेऽतिपूर्णां श्रियमादधाति ॥ २२ ॥

फलाभिलाषेण मुदा सदैव
द्विजैः समन्तादपि सेव्यमानः ।
सन्तापसन्तानहरः श्रितानां
तुलाविलासं स तवैव धत्ते ॥ २३ ॥

मन्दानिलान्दोलितनम्रप्रसून-
सौरभ्यसाराहृतचित्तवित्ताः ।
यतश्च यत्नान्नियामसुधा
न मोघनक्षोमपि सञ्चयामः ॥ २४ ॥

न सम्पदा ते तुलनां कदापि
शतक्रतोरप्युपयाति लक्ष्मीः ।
अशेषसंसारविभूषणेन
सा भूष्यते किन्तु सुरद्रुमेण ॥ २५ ॥

आनन्दनिष्यन्दिसुधानिधानं
मनोरथो विग्रहवानिवायम् ।
यथा तदासङ्गसमुज्झितस्य
विलासिनः केलिकलाकलापाः ॥ २६ ॥

मुकुन्द ! तन्मूलमुपागतस्य
या सौख्यसम्पत् समुदेति सद्यः ।
न सा सुधासाररसप्रवाहे
निमज्जतोऽपि क्वचिदुज्जिहीते ॥ २७ ॥

विना तमुद्दामतमं मुरारे !
न शोभते ते बत राजलक्ष्मीः ।
तारापतिश्रीरपि शारदीया
निशेव हीना निजवल्लभेन ॥ २८ ॥

विहाय वैकुण्ठसुखानि भूमौ
तवावतीर्णस्य विलासहेतोः ।
सम्पूर्णमेवास्ति समस्तमुच्चै-
र्न्यूनन्तु तेनैव सुरद्रुमेण ॥ २९ ॥

आज्ञापयाज्ञापितया त्वयाद्रि-
सुरेन्द्रमभ्यर्थ्य तया प्रहस्य ।
परन्तु पारीन्द्रपराक्रमेहेतुः
न याचितं स्यादुचितेदयाय ॥ ४० ॥

निदेशयादेशकरं तदस्मिन्
क्षत्ये गरुत्मन्तमनन्तवीर्यम् ।
स्थाता पुरस्तात् समरे न तस्य
मदोन्मदोऽपि त्रिदिवेन्द्रदन्ती ॥ ४१ ॥

दारिद्र्यदारी ननु दुर्गतानां
तारुण्यकारी च जरातुराणाम् ।
चिन्तामणिश्चिन्तितसन्ततीना-
मुपेक्ष्यते केशव ! किं स वृक्षः ॥ ४२ ॥

मयार्थ्यमानोऽपि मुहुः प्रसूनं
नचैकमप्यस्य ददौ महेन्द्रः ।
दुरीश्वराणां जगदीश्वरोऽसे-
र्मदो हि मेधामधरीकरोति ॥ ४३ ॥

कथञ्चिदुद्यानचरान् प्रसाद्य
मयाद्य हृद्यं कुसुमं तदेकम् ।
त्वदर्थमानीतमिदं प्रयत्नाद्
याच्ञाऽपि पुण्या भवद्दर्शनाय ॥ ४४ ॥

न सम्पदा ते तुलनादृलेन
शतक्रतोरप्युपयाति धामो ।
अशेषसंसारविभूषणोत्तमाय
सा भूष्यते किन्तु मणिं फणीव ॥ २५ ॥

आनन्दसारभ्यभराभिरामं
विलोक्य तल्लोचनलोभनीयम् ।
प्रसूनमुक्तूनमना सुरादिः
अद्भुामधाहाषि विरिञ्चिसूनोः ॥ २६ ॥

ततस्तदादाय मुदा तदानी-
माघ्राय च कीरमुखारविन्दः ।
न्यवेशयत् केशचयेषु भैष्म्याः
प्रेमा नवः किं सहते विलम्बम् ॥ २७ ॥

अथ प्रसूनामन्दमरन्दधारा-
मत्तालिमालारणितच्छलेन ।
प्रवाचतेवामरनाथभावि-
सौभाग्यलीलाजयडिण्डिमोऽद्य ॥ २८ ॥

उदारधाराधरमन्द्रनादान्
विडम्बयन् धीरतरस्वरेण ।
ततः स्मितोद्भासिमुखेन्दुरिन्दु-
प्रभं प्रभावातिशयं तमाह ॥ २९ ॥

अवादि यन्मे मधुरं भवद्भि-
र्विजृम्भितं तत् त्वदनुग्रहस्य ।
परन्तु मित्रैः सममात्महेतुः
प्रायो विवादो न शुभोदयाय ॥ ४० ॥

मखैरसंख्यैर्विविधैस्तपोभि-
र्वधैः समूलैरपि दानवानाम् ।
सन्तोषणीयः किल योऽनुवेलं
कथं विरोध्यः स मया महेन्द्रः ॥ ४१ ॥

निदेशकारिण्यनुजे नितान्त-
स्निग्धेऽनुरक्ते मयि वासवस्य ।
यदा भविष्यत्यनघप्रसाद-
स्तदा स दाता स्वयमेव सर्वम् ॥ ४२ ॥

एवं वदत्यद्रिभिदोऽनुजेऽस्य
सन्तापसन्तानमवाप चेतः ।
समीहितासिद्धिविधौ हि नित्यं
मनो मुनीनामपि मोहमेति ॥ ४३ ॥

स्वस्त्यस्तु ते माधव ! साधयामो
भूयो भवद्दर्शनसौख्यमस्तु ।
उदीरयन्नेवमथ क्षणेन
सोऽन्तर्दधे प्राप्य हरेरनुज्ञाम् ॥ ४४ ॥

ततः प्रवृद्धोद्धतवीरयुद्ध-
कुतूहलालोककलाविलासी।
सत्योपमातुर्भवनं प्रविश्य
मुनीश्वरस्तामिदमाह वृत्तम् ॥ ४५ ॥

आकर्ण्य कर्णेजपया तया तद्
वचो महर्षिः प्रणिपातपूर्वम्।
विसर्जितस्तत् क्षणमेव हर्षा-
ज्जगाम धाम प्रमथाधिपस्य ॥ ४६ ॥

कलावती नाम कलास्वभिज्ञा
प्रणोदिताऽसौ मुनिनाथ वक्त्रम्।
प्रवृत्तिमेता परितोऽध्य सत्यां
निकेतमस्याः सहसाससाद ॥ ४७ ॥

विनम्रवक्त्रा कितवेयमस्यैः
चितिं समुद्दिश्य क्षणमास तूष्णीम्।
ततोऽस्य हेतुं सुदृशानुयुक्ता
निःश्वस्य दीर्घं रहसीदमाह ॥ ४८ ॥

शुभ शुभे। कश्चिदुदारशीले।
शीलेन ते तोषमुपैति नाथ ।
इतोऽस्ति सत्यं नहि सुन्दरीणां
सन्तोष्यते यद्दयितस्य चेतः ॥ ४९ ॥

जगत्त्रयेऽपि प्रथितं भवत्याः
सौभाग्यमप्याहतमम्बुराशि ! ।
सम्भावनायां हि समुद्गतायां
ह्रासोऽपहासोदयमातनोति ॥ ५० ॥

सौन्दर्यगर्वेण हरेर्वधूनां
मूर्ध्नि त्वयादायि पदारविन्दम् ।
हेतोरतो भाविनि ! तावकीना
संख्यानभी कीर्त्तिरयेपलोकम् ॥ ५१ ॥

परस्परालापविलासकाले
कल्याणि ! सौभाग्यमदस्त्वदीयः ।
प्रसूयते विस्मितमानसाभिः
कदा मुदा न त्रिदशाङ्गनाभिः ॥ ५२ ॥

गुणैर्मनोज्ञैर्विमलैश्च शीलै-
रूपैरुदारैर्वयसा नवेन ।
त्वमम्ब ! पूर्णासि तथाप्यकस्मात्
कथं पतिस्तेऽद्य हतानुरागः ॥ ५३ ॥

प्रसाद्य शक्रं सति ! नारदेन
कथञ्चिदासादि सुरद्रुपुष्पम् ।
वात्सल्यतस्ते तदयं प्रदातुं
पुरीमिमां प्राप समुत्सुकोऽसौ ॥ ५४ ॥

विहाय सत्राजितराजकन्यां
न काचिदन्यार्हति तत् पृथिव्याम्।
उद्भासिपीयूषमयूखबिम्ब-
विभूषणा सुन्दरि! रात्रिरेव ॥ ५५ ॥

त्वदर्थमेवाद्भुतपारिजात-
प्रसूनमानीतमनेन यत्नात्।
इमां समाकर्ण्य कुतोऽपि वार्त्तां
तं रुक्मिणीयत्त्वरयाजुहाव ॥ ५६ ॥

अतः शरच्चन्द्रमुखि! त्वदीयं
निकेतनं नाद्य मर्हार्यरायात्।
अनन्तवीर्य्यस्य हरेरनुज्ञा-
भङ्गाय कः स्यात् पुरुषः प्रवीरः ॥ ५७ ॥

समागतं सोऽथ समादरेण
तं पूजयामास मुदा तदानीम्।
ततः प्रसूनस्य कथाः समस्ताः
प्रस्तावयामास हसन् मुरारिः ॥ ५८ ॥

अवध्यमानोऽप्यमुना वचोभि-
रबोधि सौगन्ध्यभरैरसौ तत्।
समुद्गतः शारदशीतरोचिः
प्रभ्वः किमाच्छादयितुं करेण ॥ ५९ ॥

विचार्य्य पर्य्याकुलमानसेन
हरिस्तदायादि नतेन तेन ।
परन्तु धार्मीक ! विधौ विरुद्धे
न सिद्धिमायान्ति समीहितानि ॥ ६० ॥

देवास्य पुष्पस्य कृते विनीता
सत्राजिती मां सततं ययाचे ।
उपेन्द्र ! देवेन्द्रमपि प्रसाद्य
तदर्थमानीतमिदं मयाद्य ॥ ६१ ॥

इमामनादृत्य गिरं तदीया-
मादातुमैतद्विभुरिच्छति स्म ।
दुरीश्वरे लोभपरे नराणां
काङ्क्षयः किं फलिता भवन्ति ॥ ६२ ॥

स्वयं तदादाय करात्मदूर्ये-
र्विद्योतमानामिव भाग्यलक्ष्मीम् ।
विदर्भजायाः कवरीनिवेशे
निवेशयामास तदैव देवः ॥ ६३ ॥

सद्यस्तदासाद्य मदेन तस्याः
समुल्लसन्त्या मयि सावहेलम् ।
विलोकित यत् स्मितमुग्धभासो-
दद्यापि तन्मे हृदय दुनोति ॥ ६४ ॥

समं मुकुन्देन विदर्भजाया-
स्तदैकसिंहासनसङ्गतायाः।
व्यलोकि या दीप्तिकदारकर्णा
न पारमागच्छति सा गिरां मे॥ ६५॥

अयानवद्याङ्गि! ममापि पुण्यै-
र्मन्ये समासादि हठेन योपः१.
निकेतमागत्य यदच्युतस्य
सौभाग्यहानिस्तव हन्त दृष्टा॥ ६६॥

समुद्गतायास्तव कीर्त्तिलक्ष्याः
सरोजमुग्धाचि! ललाटपट्टे।
मलीमसं त्वद्दयितस्य दृश्यं
कस्तूरिकालेपनतामुपैति॥ ६७॥

निशेव चन्द्रस्य शिवेव शम्भोः
शचीव जिष्णोः कमलेव विष्णोः।
सौभाग्यमासाद्य चिरं मुरारे-
रिमामवस्थां कथमागतासि॥ ६८॥

भायमुदीर्णतरः किल ते यशो-
हिमरुचोऽह्वति लाञ्छनसञ्चयः।
इति विचिन्त्य चिरं परितापतो
न हृदये मम देवि! सुखोदयः॥ ६९॥

इति वलति तदीये वाग्विलासे समन्ता-
दुपगतगुरुकोपास्ते घर्षोणाननश्रीः ।
श्वसितमुपचितं यत् सा बभारानतभ्रूः
सफलमखिलकृत्यं तेन तेने महर्षेः ॥ ७० ॥

इत्थं वाग्विभवैरतीवकपटादुज्जृम्भमाणैः शनै-
रोपावेशवशं विधाय सुतरां चित्तं कुरङ्गीदृशः ।
प्रीतिं प्राप हृदा तदेयमचिरादुल्लासफुल्लानना
मंसिद्धेषु समीहितेषु लभते हर्षप्रकर्षं मनः ॥ ७१ ॥

इति वासुदेवविजये महाकाव्ये कुसुमप्रदानो
नाम द्वितीयः सर्गः ।



## तृतीयः सर्गः ।



अथ कोपपरीतचेतसा
घनबाष्पोद्गमकुण्ठकण्ठया ।
जगदे जगदेकभव्यया
दलदम्भोजदृशा शनैः शनैः ॥ १ ॥

करुणापरिपूर्णचित्तया
प्रचुरस्नेहरसाभिषिक्तया ।
मदनुग्रहतः प्रभो ! त्वया
विदितं सर्वमिदं निवेदितम् ॥ २ ॥

विलसत्यपि चारुचन्दन
द्रवशीते गदिते तवाधुना ।
न मतिर्मम याति निर्वृतिं
हिमधाम्नीव रथाङ्गसहतिः ॥ ३ ॥

तदनीतिकथानुतापितं
दृढपाषाणनिभं मदन्तरम् ।
जलवद्वचसाद्य सिञ्चसि
स्फुटनायैव परिस्फुटं वत ॥ ४ ॥

अनुरागरसालसां सदा
विभ्रदान्तःकरणामनिन्दिताम्।
किमलम्भि फलं मधुद्विषा
सहसा वञ्चयताबलामिमाम्॥ ५॥

अधिगम्य तवास्यपङ्कजा-
चरितान्यथ शठस्य शार्ङ्गिणः।
असवस्तरसैव मामकाः
किल कामं कलयन्ति निष्क्रमे॥ ६॥

मलिना तनुरस्य यादृशी
कलितं हन्त तथैव मानसम्।
कितवः कथमन्यथा तथा
रचयामास ममैव वञ्चनाम्॥ ७॥

दधदन्तरतीव नीरसं
सरसं किन्तु बहिः प्रकाशयन्।
विधिवञ्चितया मयाद्य किं
विदितो दुष्फलवन्न माधवः॥ ८॥

कलयन्ननुकूलतां स मे
कथमद्य प्रतिकूलतामधात्।
खदिरो मुखरागदः क्वचिद्
विरसधारतरः सदैव हि॥ ९॥

हृदयादपि पूतनाद्विषो
हृदयं मे कठिनं हि वज्रवत् ।
समवाप्य विषादमीदृशं
शतधा यन्न हठेन दीर्य्यति ॥ १० ॥

परितः परितापकारिणा
परमस्नेहरसापहारिणा ।
हरिणा शिखिनेव साम्प्रतं
बत मीताक्षि दग्धद्यामहम् ॥ ११ ॥

सुलभं सुलभेषुदुर्लभं
मुनिना स्नेहवशान्ममाहृतम् ।
अथ तत् स्वयमेव तत्करा-
व्ययताकारि न किं मुरारिणा ॥ १२ ॥

सुरपुष्पमवाप्य निर्भर-
स्फुरदुद्रिक्तमदोद्धतस्मितम् ।
अवलोक्य विदर्भनन्दिनी-
वदनं किं भविताद्य मे हृदि ॥ १३ ॥

अयमीदृगुपस्थितो महान्
मम हा हन्त नवः पराभवः ।
इह चेन्न जहामि जीवितं
सुभगं वर्त्म कलङ्कितं ततः ॥ १४ ॥

यथसान्तरश्मिचारुणा
जगद्द्योति मया चिरादिदम् ।
अवमानकलङ्ककारिणा
हरिणा तस्मजिनीकृतं कुतः ॥ १५ ॥

किमपेक्ष्य निमित्तमञ्जसा
मयि वामोऽभवदम्बुजेक्षणः ।
अथवापकृती न कारणं
मलिनानामवलम्बते मनः ॥ १६ ॥

तव सन्तु शिवानि गम्यतां
विधिनैवास्य कृता गतिर्मम ।
ज्वलति ज्वलने मुदा तनू-
स्तृणभावं सरसा गमिष्यति ॥ १७ ॥

सरलापि वधूः प्रियस्य हृत्-
स्खलिता याति खलु प्रतीपताम् ।
गलिता ललिता लता ध्रुवं
विटपिस्कन्धतटान्न जीवति ॥ १८ ॥

असुभिः सहसैव गम्यतां
परमेतत् तु परेशमर्थये ।
समुदेतु न तेन शार्ङ्गिणा
मम योगो जननान्तरेष्वपि ॥ १९ ॥

इति रोषभरारुणानना
मृदु सम्भाष्य तदा कलावतीम्।
घनवाप्पनिरुद्धभाषिता
सहसा मौनमुवाह मानिनी॥ २०॥

अथ सा सरला विचिन्त्य त-
द्धृदयारोपितरुक्ममीषणम्।
बिसिनीव विलूनपङ्कजा
निममज्ज प्रसभं शुचाम्बुधौ॥ २१॥

अतिमन्युविदूनमानसां
घननिःश्वासविशोषिताधराम्।
परिसान्त्वयितुं कलावती
स्मितचोमिति तामभाषत॥ २२॥

अवमाननखिन्नमानसां
नववल्लीमिव वह्नितापिताम्।
भवतीमवलोक्य निर्भरं
प्रसभं कस्य मनो न दूयते॥ २३॥

मुखमम्बुजकोषकोमलं
तव तन्वङ्गि! शुचा हृतद्युति।
तपनातपतापितो दिने
हिमधामेव मनो दुनोति मे॥ २४॥

अयि बालमृगाक्षि ! लक्ष्यते
वदनं ते निचितं घनाम्बुभिः ।
अतिसान्द्रतुषारधारया
परिकीर्णं सरसीरुहं यथा ॥ २५ ॥

मलिनं भवदाननं शुचा
हृदि तापं तनुते समीक्षकैः ।
कुहिरेण तिरोहितो विधुः
कुमुदानां मुदमादधाति किम् ॥ २६

त्यज खेदमुदारमानसे !
विरसे धातरि किन्न जायते ।
सुखमीदृगवस्थमद्य ते
मम चेतः क्षमते न वीक्षितुम् ॥ २७ ॥

गुणराजिविराजिता सता-
मपि मान्या चरितेन चारुणा ।
त्वमपीदृशमागता दशां
किमसाध्यं विमुखस्य वेधसः ॥ २८ ॥

यदुवीरदुरन्तचेष्टितै-
रयमस्तोकमुपप्लुतम् ।
अपनेतुमिदं न शक्यते
मम जीवव्ययतोऽपि किं शुचा ॥ २९ ॥

ललिताङ्गि ! विपद्विपीडना-
दवसीदन्ति सदैव दुर्धियः ।
अकृशव्यवसायशालिनः
सुधियस्तु प्रथयन्ति पौरुषम् ॥ २० ॥

महतामपि माननीयतां
त्वमुपेता निजजन्मवैभवैः ।
इदमम्ब ! कदापि नोचितं
यदविज्ञेव चिरं विषीदसि ॥ २१ ॥

भव भाविनि ! सुस्थमानसा
सहसा सेत्स्यति ते समीहितम् ।
तदुदेति जगत्त्रयेऽपि किं
यदलभ्यं मम बुद्धिसम्पदा ॥ २२ ॥

विजहीहि वयं नहीदृशो
भविता कोऽपि परिश्रमः शुभः ।
परमुन्नतसिद्धिसाधनं
वचनं मे कलयावधानतः ॥ २३ ॥

स्तुतमित्यघभारभङ्गुरां
भुवमालोक्य दयार्द्रमानसः ।
नरवेषधरः परः पुमा-
नवतीर्णो वसुदेवसद्मनि ॥ २४ ॥

रचितेऽपि तनूव्यये त्वया
परिपूर्णस्य तदस्य किं कृतम् ।
किमुदेति समुद्धृते पयः-
पृषते लोकविधिः पयोनिधेः ॥ २५ ॥

अथ वृत्तमवेत्य चेदसौ
भविता भामिनि ! विवशमानसः ।
अवमाननमद्य दारुणं
किमनेनैव तवापनीयताम् ॥ २६ ॥

तदिमं व्यवसायमञ्जसा
दलदम्भोजदलाक्षि ! दूरय ।
नहि ते चरिते नतभ्रुवा-
मयशोदायिनि दीयतां मतिः ॥ २७ ॥

अपराधविधायिनि स्फुटं
दयिते कार्यदृशां मृगीदृशाम् ।
नृपनन्दिनि ! नान्यदीप्यते
ननु मानान्निजसिद्धिसाधनम् ॥ २८ ॥

सुतनु ! त्वमतः प्रकल्पय
प्रसभं मानमुदारचेतसि ।
न विधेयविधौ विलम्बिता
किल क्वापि शिवाय जायते ॥ २९ ॥

अनुनेष्यति दूनमानसो
भवतीं मानवतीं सनातनः।
अथ तत्र वशत्वमागते
किमलभ्यं जगतीतलेऽखिले ॥ ४० ॥

नियतं त्वयि भाविनो यथा
न तथान्यासु मुरारिरीष्यते।
कुलशीलवयःकलावती
भवतीवास्ति किमन्य काचन ॥ ४१ ॥

स्वयमप्यनुनेतुमागतो
नहि वाच्यः किमपि त्वया हरिः।
त्वदभाषिणि मानशालिना-
मवलम्बः खलु मौनमुच्यते ॥ ४२ ॥

अथ मन्युमवेत्य माधवो
भविता काकुवचःपरायणः।
कुतुकेन तदार्थयस्व तत्
सुरसूनं हृदयेप्सितात्मनः ॥ ४३ ॥

अनुरागरसार्द्रमानसो
भवदुक्तं प्रतिपत्स्यते विभुः।
प्रतिपन्नमतो जगत्पतौ
सुरशाखी भवनाय एव ते ॥ ४४ ॥

न मनागपि तस्य सम्भवेत्
सुरपुष्पाहरणे परिश्रमः।
अधिगम्य तदीयमीप्सितं
मघवा तत् स्वयमेव दास्यति ॥ ४५ ॥

कुसुमप्रभवावमानना-
मसुनैव त्वमपाकुरु द्रुतम्।
स्फुरति प्रखरे दिवाकरे
क्रियते किं तमसा पदं क्वचित् ॥ ४६ ॥

घनमानतरङ्गिणीपयः-
प्रकरैर्मौनपयोदवर्द्धितैः।
अवधीरणपङ्कदूषितां
सुसखि! क्षालय कीर्त्तिमात्मनः ॥ ४७ ॥

अयमद्य मया निवेदित-
स्तव सम्मोदविधायको विधिः।
हृदयं विनिधेहि सिद्धये
परिसिध्यन्तु शुभे! मनोरथाः ॥ ४८ ॥

अधुना तव मङ्गलार्थिनी
गिरिजामर्चयितुं व्रजाम्यहम्।
इति सा समुदीर्य्य सादरं
तरसा तद्भवनाद् वहिर्ययौ ॥ ४९ ॥

वलिताः स्वयमेव तद्रुचः
प्रथिमानं प्रययुस्तदुक्तिभिः।
सुहृदा हि नभस्वता भृशं
भजते भीषणतां हुताशनः ॥ ५० ॥

अथ सा सहसा मनस्विनी
सकलं स्वं विभूषणं जहौ।
प्रबलाधिविधूतचेतसो
न भवेत् क्वापि कदापि निर्वृतिः ॥ ५१ ॥

शयनं परिहृत्य भामिनी
कमनीयं कुमुदेन्दुसुन्दरम्।
अपिधाय पटाञ्चलेन सा
वदनाब्जं निषसाद भूतले ॥ ५२ ॥

घनमानविदूनचेतसः
स्फुरदम्भोजदृशो मुखश्रिया।
जलदेन तिरोहितैकतो
विजिता शीतकरद्युतिस्तदा ॥ ५३

दिशि यत्र विलोललोचना
निदधे सैकपदे दृगञ्चलम्।
ग्रथिता इव तत्र रेजिरे
परितः शोणसरोजराजयः ॥ ५४ ॥

अधरेण तदा नतभ्रुवो
घननिःश्वासविशेषकम्पिना ।
समलम्भि तुलानिलाहति-
स्फुरता बालदलेन वीरुधः ॥ ५५ ॥

अनया हृदयान्तरज्वलद्-
गुरुकोपानलतप्यमानया ।
विहिताः श्वसितानिलोर्मिभि-
र्द्दरधूमोत्करधूसरा दिशः ॥ ५६ ॥

सुतरां कृशतामुपागतां
शशिलेखामिव तामनिन्दिताम् ।
सहसानुययुः समन्ततः
सहचर्य्यः सहजा इव त्विषः ॥ ५७ ॥

गुरुरोषभरारुणाकृतिः
परितापेन मुहुः प्रसर्पता ।
अथ ताभिरमानि मानिनी
ज्वलयन्तीव शिखा शिखावतः ॥ ५८ ॥

व्यजनं व्यजनं जलं जलं
घनसारो घनसार इत्यभूत् ।
अवरोधघटेषु योषितां
कुररीणामिव कातरो ध्वनिः ॥ ५९ ॥

प्रतिकारपरायणा द्रुतं
हृदि दाहोपशमाय सुभ्रुवः ।
घनचन्द्नसङ्गशीतलं
नलिनीकोमलपत्रमं दधुः ॥ ६० ॥

कदलीदलमन्दमारुतै-
र्बिसिनीपल्लवसंस्तरैरपि ।
न शशाम तदा स्मरोद्भवः
परिपूर्णः परितापपावकः ॥ ६१ ॥

रुजमङ्गदृशो व्यपोहितुं
नियतिं दैवविनिर्मितामिव ।
अथ ता न तयाप्यशक्नुवन्
घटमाना इव हन्त नीतयः ॥ ६२ ॥

अनुतापभरोऽधरोष्ठया
क्षुपितं लोहितलोपलत्विषा ।
सुदृशश्चतुरैः सखीजनै-
र्व्यजनच्छानुमितं तदांशुभिः ॥ ६३ ॥

मुहुर्व्यजनवीजनैः शिशिरचन्दनालेचनैः
सरोजदलसंस्तरैरपि न चेष्टते सुन्दरी ।
परन्तु हरिनामनि प्रियसखीभिरावेदिते
निवेदयति जीवितं श्रवणसीम्नि रोमोद्गमः ॥ ६४ ॥

इति विविधविधानव्यापृतानां तदानीं
सरसिजनयनानां वाग्भिरत्याकुलाभिः ।
रुदितमिव वितेने हन्त शुद्धान्त उच्चै-
र्व्यथयति नहि कं वा बान्धवानां विपत्तिः ॥ ६५ ॥

इति वासुदेवविजये महाकाव्ये सत्यसन्तापो
नाम तृतीयः सर्गः ।



## चतुर्थः सर्गः ।



तामिन्दुसुन्दरमुखीमतिखिन्नरूपां
दावाग्निदग्धामिव लतामवलोकयन्त्यः ।
सान्द्राम्बुपूर्णनयनाः प्रमदास्तदानीं
शोकाम्बुधौ निरवधौ सहसा ममज्जुः ॥ १ ॥

कर्पूरपूरपरिपूर्णसुशीतरम्भा-
मानीय वक्षसि निवेशितमम्बुजाक्ष्याः ।
देहोष्मभिर्द्रुतमवाप्य करीषभावं
श्रीखण्डपङ्कमपि तापमधात् प्रकामम् ॥ २ ॥

तेने तुषारघनसारकरम्बितेन
पाथोजिनीनवदलेन शनैः समीरः ।
तेनापि नाप तनुतापभरः प्रशान्तिं
सिध्यन्ति किं हतविधौ समभीप्सितानि ॥ ३ ॥

काचिद्दधौ वपुषि कोमलपल्लवानि
काचिन्मृणालवलयावलिमाबबन्ध ।
काचिच्चकार तरसा घनसारसार-
धूलीभरेण परिपूरितमङ्गमस्याः ॥ ४ ॥

धाराग्टहेषु नलिनीदलकल्पितेषु
शान्द्रेषु चन्दनरसेषु सशीतलेषु ।
क्कत्वापि निर्वृतिमवाप न सत्यभामा
सूनं जलात्मकमपि शय्याति हन्तलूनम् ॥ ५ ॥

एवंविधे विपुलतापमते तदानीं
तस्याः सरोरुहदृशो भृशमुज्झिहाने ।
आख्यातुमेतदवलम्बितमुत्कचित्ता
काचित् सखी मुरभिदं समया प्रतस्थे ॥ ६ ॥

कुन्देन्दुनिन्दिविशदाश्मसयाङ्गनस्थे
देवेन्द्रगोपमसृणे शयने निषण्णम् ।
व्याकोपशुभ्रसरसीरुहकर्णिकान्तः-
ससक्तषट्पदरुचिं स्वरुचा हरन्तम् ॥ ७ ॥

आकुञ्चितेक्षणदले दरहासभासि
स्निग्धस्फपोलफलके कुटिलालकान्ते ।
कस्याश्चिदाननविधावपि चिन्तितायाः
सोत्कण्ठमक्षियुगलं विनिवेशयन्तम् ॥ ८ ॥

आलोक्य तं विदलिताञ्जनपुञ्जभासं
विभ्राजमानशतपत्रसमाननेत्रम् ।
सन्नम्य नम्रशिरसा तरसा रसार्द्रं
प्रोवाच सा किमपि वाक्गिरामभिज्ञा ॥ ९ ॥

या मौलिभूषणमशेषनितम्बिनीनां
सम्मोहनायुधमुदारमपि स्मरस्य ।
निर्माणकर्मणि विधेरपि कीर्त्तिलक्ष्मीः
सा नः सखी सपदि सीदति दैव ! किं स्यात् ॥१०॥

सत्यं किमु प्रमुषितं रतिनायकस्य
सौन्दर्यसारसरसीमपि नीरसां वा ।
किं वा जगद्विलसिताभरणं विधातुं
सच्चेष्टितोऽद्य सहसा पिशुनो विधाता ॥ ११ ॥

सद्यस्तुषारघनसारपटीरपङ्कै-
रासेव्यते सततमेव सखीसमूहैः ।
सा दुर्निवारविषवेगवशीकृतेव
न क्वापि निर्वृतिमुरीकुरुते वराकी ॥ १२ ॥

आकर्ण्य कर्णविरसं सुहृदो वचस्तद्-
गाढानुरागरसभावितमुग्धचित्तः ।
निःश्वस्य दीर्घमवलोक्य दिशोऽपि शून्याः
गन्तुं प्रियासविधमेव तदोदतिष्ठत् ॥ १३ ॥

आकर्णिते खलु तदीयदशाविशेषे
शोकाभिभूतमनसो मधुसूदनस्य ।
यः सम्भ्रमोऽभवदुदारतरः स एव
सर्वोपरि प्रणयमाह मनांसि तस्याः ॥ १४ ॥

सद्यःस्मृतप्रियतमापरमाहितेन
तेनार्तिभीतिविवशीकृतमानसेन ।
तद्देश्मनिःसृतिविधौ पदवी तदानीं
ज्ञाता मुहुः परिचितापि चिरेण विज्ञैः ॥ १५ ॥

आपादपद्मकलितां वरवैजयन्ती-
मुद्भ्रान्तभावितविरोधितया तदानीम् ।
अंसे निवेशयति शार्ङ्गिणि शीर्णसूत्रा-
द्विश्लिष्य कौस्तुभमणिर्विरमास भूमौ ॥ १६ ॥

सौदर्यदं स्खलदपीतविभूषमुच्चैः
स्विद्यत्कपोलदलमुद्यदुदीर्णवेगम् ।
शुष्यन्मुखाम्बुजमपि स्वपदोचितान्तं
तत्रातताम गतमाकुलमाकुलोऽसौ ॥ १७ ॥

दूरादिमिव्य सवयोगणसंविधानैः
संसूचितं हृदयतापभरं क्षमाङ्गाः ।
सोत्कण्ठमुत्प्रसितनेत्रसरोजपत्रः
कच्छात् प्रियासदनमाशु समाजगाम ॥ १८ ॥

आविश्य तत्र शिशिरर्तुनिवासकल्पं
यत्नादलक्षित इव त्वरया मृगाक्ष्या ।
प्रोवाच तत्सहचरीर्निभृतं तदासौ
चास्रैः पदानि भवतीभिरदं निवेद्य ॥ १९ ॥

लावण्यनिर्मलविकाशविशेषशेषां
सम्बिभ्रतीं तनुलतां ललितां कथञ्चित् ।
स्निग्धप्रवालकमनीयकपोलरुच्या
संफुल्लपाटलरुचिं परिशोलयन्तीम् ॥ २० ॥

अन्तर्गतैर्नवविषादभरैरतीव-
मालिन्यपूर्णवदनां लुठितालकान्ताम् ।
नैराश्यवह्निशिखया परितापिताङ्गीं
बालां वियोगविधुरामिव शोचनीयाम् ॥ २१ ॥

उज्जृम्भमाणपृथुकोपपरम्परेण
कम्पेन दीपितपयोधरभूधरेण ।
शोणेन लोचनयुगेन च सूचयन्ती-
माकस्मिकं कमपि दुर्विनयं प्रियस्य ॥ २२ ॥

व्याकीर्णनीलकचभारघनान्धकारां
देदीप्यमाननयनांशुतडित्प्रतानाम् ।
निष्पन्दतामुपगतां मधुरां प्रकृत्या
कादम्बिनीमिव तपप्रतिरुद्धवर्षाम् ॥ २३ ॥

आकुञ्चिताङ्गुलिदलेन पदाम्बुजस्य
भूमीतले किमपि निर्भरमालिखन्तीम् ।
तामुष्णनिःश्वसितनिर्भरधूमधारा-
सम्भारशुष्यदधरां सुरजिद्ददर्श ॥ २४ ॥ कुलकम् ।

जिज्ञासलोकचरितपरितेन तेन
तस्या विवेद हृदयं सुदृशस्तदासौ ।
संलक्ष्य लक्षणविदो वहिरेव लक्ष्म
रत्नागर्भगामपि खनिं नहि किं विदन्ति ॥ २५ ॥

निर्णीय मानमनुमानपरम्पराभि-
र्लावण्यशेषमपि वीक्ष्य वपुः प्रियायाः ।
दोदूयमानमनसा सुरनायकेन
भेजे भयं करुणयानुगतं प्रसह्य ॥ २६ ॥

पश्चादुपेत्य निभृतं व्यजनं तदानी-
मानीय तत्सहचरीकरतः कथञ्चित् ।
तेनाततान तनुतापशमाय तन्व्याः
स्वैरं समीरणमधीरमनाः स यत्नात् ॥ २७ ॥

अत्रान्तरे रुचिरदेवतरुप्रसून-
संसर्गवासिततनोर्मधुसूदनस्य ।
तत्राविरास नवनिर्भरसौरभश्रीः
कीर्त्तिर्मनोरमगुणादिव सज्जनस्य ॥ २८ ॥

आमोदमुद्गतममानुपमत्युदारं
संसारसारमुपलभ्य मनस्विनी सा ।
चित्तेन निर्वृतिमवाप मनाक् तदानीं
नाल्ह्लयति जगति को हि गुणेन मोदम् ॥ २९ ॥

लावण्यनिर्मथनविकाशविशेषशेषां
सम्बिभ्रतीं तनुलतां ललितां कथञ्चित्
स्निग्धप्रवालकमनीयकपोलरुच्या
संफुल्लपाटलरुचिं परिघोलयन्तीम् ॥ २० ॥

अन्तर्गतैर्नवविषादभरैरतीव-
मालिन्यपूर्णवदनां लुठितालकान्ताम् ।
नैराश्यवह्निशिखया परितापिताङ्गीं
बालां वियोगविधुरामिव शोचनीयाम् ॥ २१ ॥

उज्जृम्भमाणपृथुकोपसमुद्भवेन
कम्पेन वेपितपयोधरभूधरेण ।
शोणेन लोचनयुगेन च सूचयन्ती-
माकूतमं कमपि दुर्विनयं प्रियस्य ॥ २२ ॥

व्याकीर्णनीलकचभारघनान्धकारां
देदीप्यमाननयनांशुतडित्प्रतानाम् ।
निष्पन्दतामुपगतां मधुरां प्रकृत्या
कादम्बिनीमिव तपप्रतिरुद्धवर्षाम् ॥ २३ ॥

आकुञ्चिताङ्गुलिदलेन पदाम्बुजस्य
भूमीतले किमपि निर्भरमालिखन्तीम् ।
तामुष्णतश्वसितनिर्भरधूमधारा-
सम्भारदूष्यदधरां सुरजिद्ददर्श ॥ २४ ॥ कुलकम् ।

विज्ञातलोकचरितश्चरितेन तेन
तस्या विवेद हृदयं सुदृशस्तदासौ ।
संलक्ष्य लक्षणविदो बहिरेव लक्ष्म
आगर्भगामपि खनिं नहि किं विदन्ति ॥ २५ ॥

निर्णीय मानमनुमानपरम्पराभि-
र्लावण्यसीममपि वीक्ष्य वपुः प्रियायाः ।
दोदूयमानमनसा सुरनायकेन
भेजे भयं करुणयानुगतं प्रसह्य ॥ २६ ॥

पश्चादुपेत्य निभृतं व्यजनं तदानी-
मानीय तत्सहचरीकरतः कथञ्चित् ।
तेनाततान तनुतापशमाय तन्व्याः
स्वैरं समीरणमधीरमनाः स यत्नात् ॥ २७ ॥

अत्रान्तरे रुचिरदेवतरुप्रसून-
संसर्गवासिततनोर्मधुसूदनस्य ।
तत्राविरास नवनिर्भरसौरभश्रीः
कीर्त्तिर्मनोरमगुणादिव सज्जनस्य ॥ २८ ॥

आमोदमुत्तममनौपममत्युदारं
संसारसारमुपलभ्य मनस्विनी सा ।
चित्तेन निर्वृतिमवाप मनाक् तदानीं
नालम्बते जगति को हि गुणेन मोदम् ॥ २९ ॥

सौगन्ध्यमेतदुदियाय कुतः समन्ता-
दित्यादरात् सहचरीरथ सान्वयुङ्क्त ।
ऊचुर्न किञ्चिदपि चारुगिरस्तदाल्यो
भ्रूभङ्गिभिर्मुरभिदा बहुशो निषिद्धाः ॥ ३० ॥

मौनावलम्बिनि सखीनिवहे मृगाक्षी
संवीक्षते स्म परितो हरितोऽनुवेलम् ।
मन्दायमानमहसि व्यजनं दधाने
तत्रापपात वनमालिनि दृष्टिरस्याः ॥ ३१ ॥

आलोकिते मुरहरे नयनं तदानी-
मेणीदृशो द्विगुणशोणिमसान्द्रमासीत् ।
प्रायोऽपराधिषु विलोचनगोचरेषु
तेजस्विनामतितरां हि रुषो भवन्ति ॥ ३२ ॥

सन्धुक्ष्यमाणघनमानकृशानुतप्ता
निःश्वासशोषितवराधरपल्लवश्रीः ।
व्यावर्त्य तद्वदनतो नयनारविन्दं
नम्रानना सुचिरमेव भुवं लिलेख ॥ ३३ ॥

रोषातिरेककलुषायितचित्तवृत्ति-
मुन्नीय नीतिनिपुणो दयितामथासौ ।
निष्यन्दमानमकरन्दविनिन्दि वाक्य-
मानन्दकन्दलमिवेन्दुमुखस्तदाह ॥ ३४ ॥

तल्पं सुकोमलदुकूलतयानुकूलं
हा हन्त शारदसुधाकिरणाभिरामम् ।
त्यक्त्वा शिरीषसुकुमारशरीरवल्लि !
भूमीतले ननु निषीदसि कस्य हेतोः ॥ ३५ ॥

यस्याभिरामतमधामजितः कलङ्क-
मङ्केन सुन्दरतरोऽपि विधुर्दधाति ।
सौन्दर्यसारसदनं वदनं तदस्य
कल्याणि ! किं मलिनिमानमुरीकरोति ॥ ३६ ॥

इन्दीवरद्युतिविलम्बिविलोकितेन
यत् सौख्यसागरमुदारतरं ततान ।
क्षीणायमानमधुनाधिपुर्ण तदेव
कान्ते ! कथं मम दुनोति मनोऽनुवेलम् ॥ ३७ ॥

आनन्दकन्दमदुहासमुधानिधानं
वामोरु ! ते वदनपार्वणशर्वरीशः ।
धत्ते तुलां तुहिनभङ्गमदूषितस्य
हा हन्त सम्प्रति सरोरुहकोरकस्य ॥ ३८ ॥

यत्स्पर्शनादपि समिद्धसुधासमुद्र-
सङ्गाहनादिव सुखानि समुल्लसन्ति ।
तत्रैव सर्पति तनौ तव तन्वि ! तापः
पापस्य किं हतविधेरविधेयमस्ति ॥ ३९ ॥

सञ्जीवितप्रियतरे । नहि तावकीनं
स्वप्नेऽपि विप्रियमकारि मया कदापि ।
तत् किं शुभे । श्रमकशोषितशोणिमान-
मालम्बते सपदि ते नयनारविन्दम् ॥ ४० ॥

वामासि वामनयने । मयि सानुराग-
मुल्लासय । स्मितसुधामधुरं मुखेन्दुम् ।
आनन्दवारिधिवदेतु चिरं समन्ता-
दालोकवान् भवतु भाविनि । जीवलोकः ॥ ४१ ॥

सद्यो निवेद्य कृशोदरि । किं निमित्त-
मुज्जृम्भते सपदि तापभरस्त्वदीयः ।
त्वामीदृशीं समवलोकयतो ममाद्य
सुवेल्लिता यदसवः प्रसभं भवन्ति ॥ ४२ ॥

एवं विधानि विविधानि सुपेशलानि
पत्युर्वचांसि सुतरां श्वसती निशम्य ।
नम्रानना निबिडबाष्पभरं निरुध्य
तन्वी चिरादिदमुवाच वचो विनीतम् ॥ ४३ ॥

शीलोच्चयेन विमलेन शुभैश्चरित्रै-
र्मान्याः समस्तभुवनेषु भवन्त एव ।
श्रीवत्सलाञ्छन । कदापि भवादृशेषु
स्त्रिषु किमाचरति कोपविजृम्भितानि ॥ ४४ ॥

पीताम्बर ! प्रचुरपुण्यवशाद्भवन्त-
मासादयन्ति दयितं खलु वामनेत्राः ।
सैवं मनोज्ञमवलोक्य च ते न युक्तं
मानाभिधानमपि हन्त मनस्विनीनाम् ॥ ४५ ॥

प्राणेश्वराद्य नहि कोपकषायितास्मि
नाथानुनाथनकृतेन वृथा प्रयासः ।
मद्दैववैभवमिदं त्वयि जीवनाथे
यज्जायते बत मनागपि चित्तखेदः ॥ ४६ ॥

उक्तेति सा घनकुचस्तबकानताङ्गी
श्वासोत्करैर्विलुलिताधरपल्लवाग्रा ।
मानेऽब्दे समुदिते लतिकेव नीरै-
र्नेत्रच्छदाश्रिपतितैरवनिं सिषेच ॥ ४७ ॥

इत्थं निशम्य सुदृशः समुदीरितानि
खेदादसौ सपदि क्षुब्धमना बभूव ।
आगत्य नीतिनिपुणाय सखी तदीया
काचित् तदा ललितमाधवमाबभाषे ॥ ४८ ॥

एणीदृशः कुपितकारणमप्युदीर्ण-
माकर्ण्यतां सकरुणं करुणामयाय ।
अज्ञातहेतुजनिता हि दृशां विकाराः
प्रायः प्रभो ! दुरपनेयतमा भवन्ति ॥ ४९ ॥

गीर्वाणसंसदि सहस्रदृशः प्रसाद-
मासाद्य हृद्यतरमद्य दिवः प्रसूनम् ।
एकान्तभक्तिभरभावितमानसेन
देवर्षिणा प्रभवते भवते प्रदत्तम् ॥ ५० ॥

तद्देव ! देवकुसुमं सविधस्थितायै
दत्तं तदैव भवतापि विदर्भजायै ।
प्रायः प्रसादमधिकं हि महानुभावाः
स्नेहात् सदा सविधवर्तिषु वर्तयन्ति ॥ ५१ ॥

सौभाग्यसारसमुदायनिकेतनं त-
च्छ्रुत्वा समुन्नतिविधायि विभो ! सपत्न्याः ।
सद्यः समुल्लसदसोममनोऽभिताप-
पाथोनिधौ निरवधौ सुमुखी ममज्ज ॥ ५२ ॥

तत्रास्तु ! नायमनुनायनयानुतापः
शक्योऽपनेतुमरविन्ददृशः कदापि ।
तापोद्गमं शमयितुं धरणीस्तपर्त्तौ
किं नीरदः प्रभवति स्तनितानि तन्वन् ॥ ५३ ॥

काकूक्तिभिः समनुनीय भृशं प्रियाङ्गी-
मङ्गीकरोतु सुमनःसुमनःप्रदानम् ।
एतावता प्रमुदिता भविता सखी नो
नो चेत् तदद्य भवनीयमनर्थजालैः ॥ ५४ ॥

सस्नेहमेतदभिधाय विभोः पुरस्ता-
न्मौनं सरोरुहमुखी चिरमाबभार ।
अन्तःस्मरद्द्रुमदयस्तदयं दधार
हृद्योपदेशमिव चेतसि किमवोऽपि ॥ ५५ ॥

प्रेयानथ प्रणयिनीं मृदुहासपूर्व-
मासेचयन्निव सुधामयकान्तिपूरैः ।
मानापनोदनमुदारमनास्तदानीं-
मानन्दनं वचनमिन्दुमुखीमवोचत् ॥ ५६ ॥

तन्वि ! क्षमां हृदि विधेहि निधेहि दृष्टिं
कामं मया विरचिताः शतशोऽपराधाः ।
स्निग्धेक्षणं यदि न पश्यसि पक्ष्मलाक्षि !
निर्गम्यतां मदसुभिः प्रसभं सद्यः ॥ ५७ ॥

त्वन्मुखेन्दुरुचिरा शरदागतापि
चञ्चच्चकोरमिथुना चिकुरप्रकाशा ।
सान्द्रान्धकारशिशिराम्बुकरान्विताङ्गी
श्यामापि मे वितनुते मनसि प्रदाहम् ॥ ५८ ॥

उक्त्वा रसार्द्रमिति चाटुपरायणेन
स्वैरं सरोरुहदृशः सविधं समेत्य ।
दोर्भ्यां विधूतकिसलावलिवल्लिकल्प-
मालम्बि तत्करयुगं मधुसूदनेन ॥ ६० ॥

योगस्थितामिव तदा दरमीलिताक्षीं
नैदाघबाललतिकामिव घर्मदिग्धाम् ।
आश्वास्य तां च बिसिनीमिव कण्ठकाढ्या-
मङ्कीचकार सुरसूनमसौ प्रदातुम् ॥ ६१ ॥

विद्राव्य देवनिवहानवहेलयैव
निर्जित्य शौर्यविभवेन सुराधिराजम् ।
यद्यानयामि न नितम्बिनि ! पारिजातं
भूयास्तदा सुमुखि ! मे विमुखी प्रकामम् ॥ ६२ ॥

एवं गिरा रुचिरया शपथैरनेकै-
र्माने घने मधुभिदा सुदृशोऽपनीते ।
सन्ध्यारुणाम्बरमनोहरकान्तिरस्यै-
राविर्बभूव शरदिन्दुमुखीसखीव ॥ ६३ ॥

एणीदृशः सपदि लोचनयोर्शोणिमानं
सन्ध्या दधार परितापभरं रथाङ्गी ।
अन्तर्व्यथाविविधतापकदर्थनाभिः
सार्धं हरेरपि तदास्तमियाय भानुः ॥ ६४ ॥

नयनं जगतामधीशितु-
र्विमलानामवलम्बनं रुचाम्।
निपपात तथापि भास्करः
स्वपदात् स्त्रीच्युतये हि वारुणी॥ ६५॥

मिहिरेऽस्तमिते निमीलिता
नलिनी विष्णुपदं मलीमसम्।
विरहाकुलिता च चक्रिणी
तनुते किम विपन्महौजसाम्॥ ६६॥

यतः पतिस्तत्र पतिव्रतापि
यातीति सञ्चिन्त्य तदा दिनश्रीः।
ताराच्छलेनैव विकीर्य लाजान्
रक्ताम्बरेयं पतिमन्वयासीत्॥ ६७॥

अथ तरुणतमालपल्लवाना-
मपि लघयन् परमाभिरामभासः।
गद इव नयनावरोधकारी
द्रुतमकरोज्जगदन्धमन्धकारः॥ ६८॥

मालिन्यमिव निर्भरं दश दिशः कालागुरूणां द्रवै-
रातन्वन्निव भूषणं त्रिजगतः सान्द्रेन्द्रनीलोपलैः।
तन्वन् संपरिकल्पयन्निव दिवसापिध्वसीदलैः
मध्यागं भ्रममुन्नताश घनवैर्गाढान्धकारोत्करः॥ ६९॥

नक्षत्रमालारुचिरां समन्ता-
न्नभःश्रियं वीक्ष्य तदीर्ष्ययेव।
प्रदीपपुष्पच्छलतो धरित्री
नक्षत्रमालां हृदये दधार ॥ ७०॥

निजैर्ज्योत्स्नाजालैर्जगदमलयंल्लोचनपुटीः
पटीराम्भःसेकैरिव सकललोकस्य सुखयन्।
सुशीतामातन्वन् तपनपरितप्तां वसुमती-
मतीवस्फीतश्रीर्विधुरपि तदानीमुदगमत् ॥ ७१ ॥

सौरप्रसूतेर्विरतिभाजि यदन्धकार-
वारांनिधौ निरवधौ जगदाममज्ज।
द्रागुद्यता तदुदधारि करोत्करेण
शीतांशुना किमुरुधामभृतामशक्यम् ॥ ७२ ॥

शुभ्रे ऽनिशाकरकरैर्गगने ऽतिमन्द-
मावाति कैरववनीपवने मनोज्ञे।
सार्धं तया दयितया परिपूर्णकामो
दामोदरः कुसुमतल्पमलञ्चकार॥ ७३

इति वासुदेवविजये महाकाव्ये सप्रतिज्ञमाधवो
नाम चतुर्थः सर्गः।

---

# पञ्चमः सर्गः ।



अथोद्यतो भानुमतो मयूखै-
रुद्भासितायां दिशि वासवस्य ।
प्राबोधयन् माधवमत्युदारै-
र्वैतालिका निर्मलवाग्विलासैः ॥ १

आनन्दमम्भोजवनीमिदानी-
माश्वासयन् देव ! करप्रचारैः ।
भद्राणि कोकावलिशोकमुद्रा-
विद्रावणस्ते सविता तनोतु ॥ २ ॥

समाक्रमद्भिः सहसा दिगन्तान्
विराजमानस्य रवेः करौघैः ।
भयप्रतापैरिव वैरिभूपाः
प्रभो ! निरस्ता निबिडान्धकाराः ॥ २ ॥

कृता समन्ताद्भुवनावरोध-
विधायिना या तिमिरोत्करेण ।
मुद्रागदद्वार इव त्रिलोक्या-
स्तामापदं भानुरधः करोति ॥ ४ ॥

समुद्गते सम्प्रति तीक्ष्णरश्मौ
सद्यः सरागाणि सरोरुहाणि ।
समागते प्रेयसि सन्निधानं
स्त्रीणां मनांसीव समुल्लसन्ति ॥ ५ ॥

सरोजसौरभ्यभरानुदारान्
समुद्गिरन्तः परितो दिगन्ताः ।
नूनं मनः कैरवविप्रयोगा-
दिन्दिन्दिराणामभिनन्दयन्ति ॥ ६ ॥

विधौ विरुद्धे निशि वारिजानां
गर्भेषु दुःखेष्विव हन्त मग्नाः ।
मधुव्रताः पुण्यमिव प्रभात-
मासाद्य सद्यः सुखिनो भवन्ति ॥ ७ ॥

उल्लुण्ठितारो नलिनीवनीनां
विलम्बितारो ललनालकेषु ।
सङ्गाहितारः सरितां दिशन्तु
प्रातस्तनास्ते पवनाः शुभानि ॥ ८ ॥

अपूरि लोकः किल कान्तिपूरै-
रदूरि भूरिर्निविडान्धकारः ।
अहारि शोकोऽच्युत ! कोकयूनो-
रकारि किं नोदयताऽरुणेन ॥ ९ ॥

प्राणेशकण्ठार्पितबाहुमूला
जालान्तरालादवलोकयन्त्यः ।
कान्ताः समाकुञ्चितलोचनान्तै-
र्दिशन्ति भानौ घनशोणिमानम् ॥ १० ॥

संवेशलेशादलसायमाने
प्रोन्मीलयं द्राङ् नयने मुकुन्द ।
रोचिर्विचित्रं शतपत्रपत्रं
चिरार्ज्जिताहङ्कृतिमुज्झतात् ॥ ११ ॥

निद्राविनोदं भवति प्रयाते
पयोनिधिः पूर्णदशामुपैति ।
स्नानार्थमानीय पयांसि सद्य-
स्तमाशु संशोषय शुभ्रकीर्ते ॥ १२ ॥

निशम्य हर्षादिति मागधानां
स्निग्धानि मुग्धानि निवेदितानि ।
समुल्लसल्लोचनपद्ममुद्रां
विद्रावयामास तदा मुरारिः ॥ १३ ॥

आमृश्य नेत्रे प्रतिमुच्य हारं
नियम्य लोलालकपल्लवानि ।
श्रमालसाङ्गी पतिभक्तियुक्ता
तत्याज सत्या शयनं पुरस्तात् ॥ १४ ॥

उद्धूय युग्मं भुजयोस्तताङ्गी
विजृम्भमाणा चणमास तन्वी ।
मन्ये मनोजोऽद्य विजित्य विश्वं
कौटिल्यमुक्तं स्वधनुश्चकार ॥ १५ ॥

एणीदृशः पाणिपुटे निरुद्धा
वेणी क्वणत्किङ्किणिका विरेजे ।
सरोजकोशादिव निःसरन्ती
श्रेणी घनीभूय मधुव्रतानाम् ॥ १६ ॥

आनीय रम्ये मणिपादुके सा
निवेदयामास विनीतमूर्त्तिः ।
आलोक्य वक्त्रात्मनिन्दितायां
स्तदोदतिष्ठद्युदितो मुकुन्दः ॥ १७ ॥

अथोपविश्येन्दुशिलातलेऽसौ
ताम्बूलरागारुणिताधरश्रीः ।
विलोकयन् दर्पणमम्बुजाक्षः
प्रक्षालयामास मुखेन्दुबिम्बम् ॥ १८ ॥

ततोऽन्वितोऽसावनुजीविवृन्दैः
प्रभातवातं परिषेव्य भव्यम् ।
शनैः श्रमागारसमीपधामा
कामाधिकश्रीर्भुजिक्ष्मगाम ॥ १९ ॥

निर्माय मल्लोचितमाशु वेश-
मापूर्य कर्पूररजोभिरङ्गम् ।
मुकुन्दलास्फालविशालबाहु-
र्वीरो रसो मूर्त्त इवाविरासीत् ॥ २० ॥

सानन्दमिन्दीवरसुन्दरश्री-
र्नियुध्य शार्ङ्गं यदुवीरवर्गैः ।
निबद्धगोधः कलिताङ्गुलित्र-
श्चिक्षेप शार्ङ्गेण शरान् मुरारिः ॥ २१ ॥

आचार्य्यभावं स्वयमेव तन्व-
न्नभ्यासयामास शिशूनथासौ ।
नियोजिता शिष्यगणे हि नूनं
विद्यानवद्या प्रथिमानमेति ॥ २२ ॥

नवं तनीयः परिधाय वासः
सुरम्यपाटीरवरासनस्थः ।
स वासिताङ्गोऽथ सुवासतैलै-
र्नैर्मल्यमुद्वर्त्तनतः प्रपेदे ॥ २३ ॥

अम्भोभिरम्भोनिधिसङ्गतायाः
समाहृतैः प्राक् सुरनिम्नगायाः ।
सस्नौ सुशीतैर्नवशातकुम्भ
कुम्भच्युतैरादरतोऽच्युतोऽयम् ॥ २४ ॥

प्रतिप्रतीकादपसार्य्य वारि
पीताम्बरे धारतरे दधानः।
स सयतात्मा विधिना विधिज्ञः
समर्चयामास शिवो शिवाय ॥ २५ ॥

अथ प्रसन्नाननपुण्डरीको
दानान्यनेकानि वनीयकेभ्यः।
स्रग्गन्धवासोभिरलङ्कृतेभ्यो
ददौ विदूराणि हृदोऽपि तेषाम् ॥ २६ ॥

समाहृतैरम्बुभिरम्बुराशि-
स्तथाऽभ्न्यूनः समभूत् तदानीम्।
यथा हरेर्दानपयःप्रवाहै-
र्वद्धिष्णुमालोक्य पयोधिमन्यम् ॥ २७ ॥

विहङ्गसोदर्यात् तेन तदा प्रदातुं
विचारितः स्वर्णमहीधरोऽपि।
परं तदावासविलासभाजां
निवर्त्तितोऽभूत् क्षपया सुराणाम् ॥ २८ ॥

एवं विधायाह्निककृत्यजातं
सभाजयामास मुदा कवीन्द्रान्।
दत्त्वा च तेभ्यो विविधेप्सितानि
लब्धाशिषः सौख्यमवाह कृष्णः ॥ २९ ॥

अथ श्रियाधःकृतराजराजो
राजोचितं वेशमसौ विधाय ।
विलोक्य वक्त्रं मुकुरे स्मितास्यः
शनैः सभामन्दिरमाससाद ॥ २० ॥

तदा सुवर्णासनसन्निषण्णः
प्रफुल्लनीलाब्जरुचिश्चकासे ।
सुमेरुशीर्षे सहसा प्ररूढो
महेन्द्रनीलाद्रिरिवापरोऽयम् ॥ २१ ॥

महोदयानां परमं निधान-
मभीष्टविश्राणकमाश्रितानाम् ।
अथोपतस्थुर्वरमन्त्रिणस्तं
समुद्गतं भानुमिवाब्जभासः ॥ २२ ॥

आमुक्तविद्युन्निभपीतवस्त्रं
तापिञ्छपुञ्जद्युतिमात्तचापम् ।
निदाघतप्ता इव वारिवाहं
प्रपेसुरेनं प्रणयाज्जनौघाः ॥ २३ ॥

विचारधारार्पितशुद्धबुद्धि-
र्विनोदयामास बुधान् स तत्र ।
काव्येषु भव्येषु च सत्कवीनां
कृतावधानो मुदमाततान ॥ २४ ॥

मघवद्वृन्दैरिव राजवर्गै-
रभ्यीयमानेन मनोज्ञभासा।
तुषारधाम्नेव शरन्नभःश्री-
र्विभूषिता तेन सभा तदानीम् ॥ ३५ ॥

भ्रूसंज्ञयैवासनसन्निविष्टा-
नाहूय मन्त्राधिकृतानथासौ।
धीरस्वरः स्मेरमुखारविन्दो
मन्त्रेषु जीवप्रतिमो जगाद ॥ ३६ ॥

अङ्गीकृतं कारणतः कुतोऽपि
देवद्रुमस्याहरणं मयाद्य।
सम्पद्यते तत् कथमित्युदीर्ण-
श्चिन्ताप्रवाहो वहति मदन्तः ॥ ३७ ॥

सुखैरुपायैस्तदवश्यमेव
विधेयमायासपरायणेन।
अपूरिताङ्गीकरणस्य पुंसो
भवन्ति भूयांसि हि दुर्यशांसि ॥ ३८ ॥

तद्ब्रूत यूयं बहुदर्शिनोऽद्य
परं प्रवीणा नृपनीतिशास्त्रे।
अङ्गीकृतं मे परिपूरितं स्याद्
यथा विरोधो न भवेच्च देवैः ॥ ३९ ॥

तदा निगद्येति गदाग्रजोऽसौ
बभार मौनं परितो विलोक्य ।
तन्वन्ति वक्रर्थमनर्थहीनं
प्रायो हितं भावितमेव सन्तः ॥ ४० ॥

वचांसि कंसद्विषतस्तदानीं
निपीय पीयूषसहोदराणि ।
मुदा हृदाधाय जये विजेता
गदो जगादोग्रमतिर्मुकुन्दम् ॥ ४१ ॥

विशुद्धबुद्धे ! निखिलेऽपि लोके
न वेदनीयं परिदृश्यते ते ।
तथापि यत् पृच्छसि मादृशांस्ते
माहीनताया: परिजृम्भितं तत् ॥ ४२ ।

केयं नवीना तव नाथ ! लीला
यन्मन्यसे दैवतरु दुरापम् ।
सुरान्तक ! त्वद्भुवि भङ्गराया-
मुद्भियते कस्य न भीतिरन्तः ॥ ४३ ॥

निवृत्तिबीजं विपदामुदार-
सम्पद्गणानामपि पूर्त्तिमूलम् ।
निदानमुद्दामयशस्ततीनां
विपश्चितो विक्रममामनन्ति ॥ ४४ ॥

विराजमानो ज्वलदंशुजालै-
र्यत् तापयत्येव जगन्ति नित्यम्।
उच्चैरतो निर्भरसम्भृतश्री-
र्धत्ते समन्तादुदयं दिनेशः॥ ४५॥

हेतोः कुतो वा ज्वलनं ज्वलन्तं
बिभर्त्ति नेत्रेण सदा त्रिनेत्रः।
प्रायः प्रकृत्यैव महानुभावा-
स्त्यजन्ति न क्वापि परं प्रतापम्॥ ४६॥

विहाय दण्डं प्रथनेन साक्षां
नोपैति शत्रुर्वशतां कदापि।
उत्सृज्य वह्निं ननु नीरसेकैः
किमश्मसारो मृदुतामुपेयात्॥ ४७॥

प्रभावकै विहितां प्रचण्डे
दण्डे समुद्राविणि कार्यसिद्धौ।
वयामुपायान्तरकल्पनाया-
मासक्तचित्ताः सहसा लभन्ते॥ ४८॥

पराङ्मुखानां चरमे ह्युपाये
राज्ञामुदग्रोऽपि भुजप्रतापः।
धत्तेऽवहासं बत निर्विषाणा-
मुपः फटाटोप इवोरगाणाम्॥ ४९॥

नचोदयं नापि परं प्रतापं
प्रपश्यते देव! कदापि भूपः।
पादप्रचारैः प्रसभं धराभ्र-
च्छीर्षाण्यनाक्रम्य यथोष्णरश्मिः ॥ ५० ॥

कलाभृतां ताम्रतामतीत्य
कौटिल्यमेवाभ्युदयस्य हेतुः।
विस्मृत्य रात्रेशमयीह सर्वे
द्रष्टुं यतन्ते सितपक्षतीन्दुम् ॥ ५१ ॥

तस्मादनुत्साहविषादमोहान्
विनाश्य विज्ञानमहाबलेन।
उपायमातिष्ठ चतुर्थमद्य
तेनाञ्जसा सिध्यतु सर्वमेव ॥ ५२ ॥

मत्या सुहृद्भिर्भुजधर्मसुग्रं
दोर्विक्रमेणाक्रमतां जगन्ति।
उत्सर्पिहिनांशुसितासिधारः
करः सहायः समराङ्गणेषु ॥ ५३ ॥

बलानुज! त्वद्दलवद्दलस्य
बलस्य नूनं समरः परीक्षा।
यद्भूभृतां क्लैव्यभीतिमूलं
मनीषिणः साम्यमुदाहरन्ति ॥ ५४ ॥

मुहुर्मुहुर्दैत्यनिराकृतश्रीः
किं गच्छते वीरवरेष्वपीन्द्रः ।
महेन्द्र इत्याद्दरभागिदानीं
विनिर्मितो नाथ ! त्वया त्वयैव ॥ ५५ ॥

पुरा तुराषाड् गिरिधारिणस्ते
बालस्य तद्दाङ्गबलं निभाल्य ।
ईर्ष्यावशात् त्वय्यतुलेऽपि कोदृ-
गपूर्ववातूत्स्यमपो तदाक्षीत् ॥ ५६ ॥

तद्देव ! समन्तात् वाहिनी ते
प्रास्थानिकं मङ्गलमाविरस्तु ।
भवद्द्विपद्भृभरैरिदानीं
प्रयातु रागं सरनिम्नगापि ॥ ५७ ॥

श्रुत्वोहतैतद्वचनोऽथ वाग्मी
महामनाः कीर्तिधनाभिलाषी ।
प्रमाणयन् सामगुणाननेकान्
नृपा म्रिनिर्वाचमुवाच योग्याम् ॥ ५८ ॥

वीरोचितं चारुतरं गरीयो
यज्जल्पितं देव ! तवानुगेन ।
एतादृशं जल्पितुमेतदन्यो
न जातु शक्नोति मुकुन्द ! कोऽपि ॥ ५९ ॥

नयाश्रितेऽर्थे गदिते गदेन
नार्थः परं कोऽपि परस्य वाग्भिः
घोरैरभिषिक्ते जलदेन भूयः
किं नाथ ! कुल्यारचनाप्रयत्नैः ॥ ६० ॥

विधेयसंसिद्धिविधायकानां
विहाय साम्नान्तु परं प्रयोगम् ।
सन्दिग्धसिद्धावधिकप्रयासे
न विग्रहे मज्जति मन्मदीयम् ॥ ६१ ॥

विधाय विघ्नः समयं समन्तात्
तनोति यो मार्दवमुपतापम् ।
स रश्मिमालीव महोदयानां
दिने दिने भाजनतामुपैति ॥ ६२ ॥

विशीर्णधामामनभीष्टहारी
तेजस्विनां चारुयशःप्रचारी ।
तपःपराणामपि तुष्टिकारी
सामप्रयोगो नहि कस्य योग्यः ॥ ६३

साम्नादिसाध्येषु समीहितेषु
योज्यो न दण्डः खलु पण्डितेन ।
हिमापनेये विषमे विकारे
प्रस्वेदनं किं तनुते गुरूणि ॥ ६४ ॥

सामानुविद्धां सहजप्रसिद्धां
नीतिं वितन्वन्नतिशुद्धकीर्त्तिः।
समाहृतश्रीरपि धार्त्तराष्ट्रै-
र्युधिष्ठिरो राजपदे स्थिरोऽभूत् ॥ ६५ ॥

जयी न दण्डे नियतः कदापि
सिद्धिर्विधेये हि विधेरधीना।
तन्नीतिशाली सहसा विधत्ते
न दण्डमाखण्डलविक्रमोऽपि ॥ ६६ ॥

शक्तित्रयेणाप्रतिमेन पूर्ण-
स्तथानुरक्तप्रकृतिः प्रकृत्या।
पुरश्च पश्चाच्च यदा समर्थ-
स्तदाभियायाद्विजयाय राजा ॥ ६७ ॥

ये रङ्गभूमिं प्रसभं विशन्ति
मूढा रिपूणामविचार्य्य शक्तिम्।
ते यान्ति तेषामचिरात् कृपाण-
धारापरिष्वङ्गसुखानि नूनम् ॥ ६८ ॥

क्षीणोऽपि शत्रुः स्वपदे स्थितस्त्व-
ज्जेतुं न शक्यः प्रभुशक्तिभाजा।
ग्राहः कृशीयानपि नीरमध्ये
गजेन्द्रमाकर्षति हेलयैव ॥ ६९ ॥

स्निग्धोऽपि नीतौ परिनिष्ठितोऽरिः
सदा विशङ्क्यः सुधिया नृपेण ।
न जातु मृङ्गीत्यतिमन्तमङ्ग !
स्वर्भानुराक्रामति शीतरश्मिम् ॥ ७० ॥

नापेक्ष्य मन्त्रं सहसा मदान्धो
मध्यं महन्तां द्विषतां व्रजेद् यः ।
पिपीलिकासङ्गममाकुलस्य
दशामसौ गच्छति पन्नगस्य ॥ ७१ ॥

तद्देव ! देवद्रुमयाचनार्थे
कश्चित् प्रहेयः सविधे मघोनः ।
तेजस्विनां हीनबलोऽपि शत्रौ
नयत्यसूद्दीपयति प्रतिष्ठाम् ॥ ७२ ॥

भवन्तमप्यर्थमवाधितेन
तनोति नीत्या खलु नीतिवेत्ता ।
साक्षात् क्षतोऽपि द्विरदोऽध्यपाद-
स्त्रिर्यैर्निनादादनुमीयते हि ॥ ७३ ॥

स याच्यमानोऽपि नचेन्महेन्द्रो
ददाति देवद्रुममिद्धदर्पः ।
विभो ! न दोषाय तदा विरोधो
यतोऽवमानं सहते न तेजः ॥ ७४ ॥

लब्धोदयोऽप्यङ्ग ! विलङ्घ्य कालं
नालम्बते जातु महो महस्वी ।
प्रगेऽपि किं दृष्टमथ श्रुतं वा
यच्चण्डतां गच्छति चण्डरश्मिः ॥ ७५ ॥

तनोति योग्ये समये महात्मा
नितान्तमुग्रत्वमनुग्रतां वा ।
विभो ! विहायो दिवसेऽर्कतेजो
दधाति रात्रौ खलु चन्द्रिकाश्च ॥ ७६ ॥

वितन्वतस्ते विजयानुकूलां
नीतिं श्रियो यान्तु वशं समन्तात् ।
विहाय नावं नरदेव ! किं स्या-
दम्भोनिधौ सन्तरणं थियाय ॥ ७७ ॥

सामाद्युपायवितयेषु सत्सु
सम्यक् प्रयुक्तेष्वपि निष्फलेषु ।
दण्ड्येषु दण्डं विनयेन्नयज्ञो
भूयोऽप्यदो नीतिविदो वदन्ति ॥ ७८ ॥

उदीरितं सात्यकिना तदेवं
हृदैव देवः प्रशशंस सम्यक् ।
विचारधारासु महोदयाना-
मुद्धावसारं मन एव मन्त्री ॥ ७९ ॥

इति वचनमुदारं सात्यकेः सत्यवाचो
विविधगुणगभीरं गौरवादाकलय्य ।
स्वयमपि हृदि भूयो भावयित्वानुवेलं
सुररिपुरथ दूतप्रेषणायोत्सुकोऽभूत् ॥ ८०

स्निग्धाभिः परिहासवाग्भिरमलैरालोकितैः सस्मितैः
दारिद्र्योदयदारिभिर्बहुविधैर्दानैः समानैरपि ।
सन्तोषं गमयन् मनः खलु नृणामापावमापामरं
स्मेरास्यो विससर्ज संसदमसौ मासोत्सवः केशवः ॥ ८१ ॥

इति वासुदेवविजये महाकाव्ये नीतिविवेको
नाम पञ्चमः सर्गः ।



# षष्ठः सर्गः ।



नारदं नयदयाविशारदं
शारदं विधुमिवातिसुन्दरम् ।
आजुहाव मनसा नवादराद्-
बादरायणमिवाथ माधवः ॥ १ ॥

सोऽधिगत्य हृदयं जगद्गुरो-
राजगाम सहसा महामुनिः ।
आत्मनाथमनसो विलम्बितुं
नालमुज्ज्वलधियः कदाचन ॥ २ ॥

द्रष्टुमुत्सुकमना मधुद्विषं
राजहंस इव मानसं सरः ।
सञ्चरन् नभसि निर्मलद्युति-
र्लोकलोचनपुटीरनन्दयत् ॥ ३ ॥

रोहिणीशकिरणाभिरामया
भासमानतनुभातिधारया ।
स्वर्नदीमभिनवामिवोच्चकै-
राततान गगनाङ्गने मुनिः ॥ ४ ॥

अविवेद्य कनकासने तदा
स्वागतञ्च परिपृच्छ्य सादरम् ।
भूमिलग्नशिरसा प्रणम्य तौ
पर्य्यतुतुषदसौ सपर्य्यया ॥ १० ॥

अर्चितो भगवता सपर्व्वतः
सर्व्वतः स खलु सम्मुदं ययौ ।
स्वामिना हि सदयेन सत्कृताः
प्राप्नुवन्ति सुधियः कृतार्थताम् ॥ ११ ॥

सादरेण हरिणा विनिर्मितां
प्राप्य सत्कृतिमतीव हर्षितः ।
नारदः सविनयो नयोज्ज्वलां
निर्म्मलां सपदि वाचमाददे ॥ १२ ॥

अद्य मे मनसि सम्मदो महा-
नद्य मे नयनयोः कृतार्थता ।
साम्प्रतं असुरभूम्नमोज्ज्वलं
यद्यलोकि तव पादपङ्कजम् ॥ १३ ॥

किं न सन्ति भुवने महर्षयः
किं न ते भवति भक्तिभाविताः ।
यत् तथापि मयि ते प्रसन्नता
तत् कृपामय ! कृपाविजृम्भितम् ॥ १४ ॥

पद्मनाभ ! हृदयस्य सम्मदो
यादृगुल्लसति सन्निधौ तव ।
स्यन्दमानकिरणे हिमद्युतौ
तादृशः किमु कदापि जायते ॥ १५ ॥

संसृतिर्भगवता कृताद्य या
सा मदीयसुकृतैर्व्यधायि किम् ।
चापलात् सहजतस्तथापि मे
तत्र कारणमुदीयते मनः ॥ १६ ॥

जातिमात्रविहितादरादहो
मादृशाद् यदुपते ! द्विजन्मनः ।
जायते यदि विधेयमक्षरा
तत् तवैव महिमा महाद्भुतः ॥ १७ ॥

युक्तमेव तदिदं निवेदनं
तावकीनपुरतो जगत्पते ! ।
यत्त्वदीयचरणपद्मसेविनां
नह्युदञ्चति जगत्यसाध्यता ॥ १८ ॥

तन्निदेशय निदेशकारिणं
किं मुकुन्द ! करवाणि तेऽधुना ।
ज्ञातनाथहृदयोऽपि सेवक
कृत्यवस्तुनि निदेशमिच्छति ॥ १९ ॥

किं प्रविश्य तरसा रसातलं
शेषशेखरमणिं नयामि ते ।
ध्यायतस्तव पदाम्बुजद्वयं
क्वापि नैव मम कुण्ठितं मनः ॥

किं व्रजामि सविधं महेशितुः
किं विरिञ्चिपुरमुत्पतामि वा ।
केशव ! ज्वलनसारथेरिव
क्वापि मे न खलु बाधते गतिः ॥ २१ ॥

एवमुक्तवति नारदे तदा
पर्व्वतोऽपि विकसन्मुखाम्बुजः ।
मौलिचालनमुदीरयन् परं
गौरवं विनिदधे तदुक्तिषु ॥ २२ ॥

नन्दनानि मकरन्दधारतो
निर्मलानि मनसः सतामपि ।
आकलय्य गदितानि सादरं
नारदस्य मुमुदेतरां हरिः ॥ २३ ॥

उल्लसन्नयनपत्रशोभिनो-
ल्लासितेन ललितस्मितश्रिया ।
आननेन लघयन् सरोरुहं
माधवो मधुरया गिराऽभ्यधात् ॥ २४ ॥

दुर्निमित्तविनिवृत्तिकारकं
तावकं पदममश्नती मम ।
भानुमन्तमिव वारिजन्मनः
क्वापि न व्रजति सम्मुदं मनः ॥ २५ ॥

सप्रसादहृदये त्वयि प्रभो !
वाञ्छितं जगति किन्न लभ्यते ।
उद्गते शशिनि सम्भृतद्युतौ
दुर्लभाः किमुत शीतला रुचः ॥ २६ ॥

हंसयानसुत ! माहशामिदं
श्रूयतामुपचितं निवेदितम् ।
त्वय्यशेषविषयोपदेशके
नाथ ! किन्न कथनीयमस्ति नः ॥ २७ ॥

देवलोकमभिगम्य सत्कृते
पारिजातकुसुमं समाहृतम् ।
अर्पितञ्च तदहो त्वयाथ मे
रुक्मिणीसविधवर्तिने पुरा ॥ २८ ॥

सौख्यभारमिव तज्जनान्तिके
मामयाचत विदर्भनन्दिनी ।
दक्षिणत्वयभङ्गभीरुणा
तन्मयापि सहसा समर्पितम् ॥ २९ ॥

तत् कुतोऽपि बत दुर्जनाननात्
संश्रुतं सपदि सत्यभामया ।
मोदते हि हृदयं सदा सुहृ-
द्वेदवस्तुनि मलीमसात्मनाम् ॥ ३० ॥

आकलय्य कुसुमार्पणं तदा
हन्त भीष्मतनयोन्नतिप्रदम् ।
प्राणहानिपरिनिष्ठमानसा
मानसागरजले ममज्ज सा ॥ ३१ ॥

तत्सखीपरिकरैरुदीरितं
दुर्विधेयमधिगम्य सुभ्रुवः ।
उद्धुताधिगतविह्वचेतसा
यातमाशु च मया तदन्तिके ॥ ३२ ॥

बिभ्रतीञ्च रुचिरैरमङ्गकं
षोडशीमिव कलां कलानिधेः ।
पश्यतः प्रणयिनीं ममोत्सुकैः
शङ्कयाकुलितमास मानसम् ॥ ३३ ॥

'सत्वरं विरम चाहमादितः
किं क्रियेत भवदीप्सितं प्रिये ! ।
भाषमाणमिति मां ययाच सा
पारिजातकुसुमं सखीमुखैः ॥ ३४ ॥

स्वीकृतं खलु मयापि तन्मुदे
पारिजाततरुदानमञ्जसा।
निर्भरप्रणयवञ्चितात्मनः
किं विवेकमवगाहते मनः॥ २५॥

तन्मुने! द्रुममिममाशु याचितुं
देवराजनगरी गरीयसी।
त्वत्कृते भवताद्य गम्यतां
गम्यता च तव कुत्र नेष्यते॥ २६॥

आशिषः स्वयमुदीर्य्य सादरं
माद्यशामथ नतिर्निवेद्यताम्।
निर्जरेशमनुयुज्य मङ्गलं
मामकीनमपि तत् प्रयुज्यताम्॥ २७॥

सर्वमेतदुचितादनुक्रमात्
स्वीकृतं खलु निवेद्य मामकम्।
उच्यतां मम गिरा चिरादिदं
मौलसद्विनयमेव वासवः॥ २८॥

कारणादुपचितान्महामते।
याचते सुरतरुं तवानुजः।
तत् त्वदीयकरुणा विजृम्भतां
दीयतां विबुधनाथ! सोऽधुना॥ २९॥

सर्व्वदा खलु निदेशकारिणे
प्राकृताय सुहृदेऽनुजन्मने ।
भूरुहोऽपि यदि नैव दीयते
तत् कथन्नु विचारचातुरी ॥ ४० ॥

यः स्मृतोऽपि मघवन् ! समीहितं
पूरयत्यविरतं भवादृशाम् ।
केशवाय सततं नतात्मने
पादपस्य वितरोऽपि किं महान् ॥ ४१ ॥

इत्थमर्थिवदुदारचेतसा
याचितोऽपि भवता सुरद्रुमम् ।
यदसौ नहि ददाति दुर्मद-
स्तन्निगद्यमिदमूर्जिताक्षरम् ॥ ४२ ॥

वारितापि विनयैः क्रुधा हरे-
राविरास सहसा हरिं प्रति ।
संहृतोऽपि वसनैः प्रयत्नतः
किं हुतं भवति नोच्छिखः शिखी ॥ ४३ ॥

त्वां मुरारिरपि गौरवादहो
याचतेऽर्जुनसखः शचीपते ।
चोदितोऽपि न तनोषि मार्द्दवं
तदयं सपदि वीतदूषणाः ॥ ४४ ॥

श्रीपते ! तव निदेशलाभतः
स्रावितं हृदयमद्य मे मुदा।
यत् तथापि विनिवेदयाम्यहं
सर्व्वथा तदवधेयमञ्जसा ॥ ५० ॥

याचितो न कतिशो भवत्कृते
वासवो विटपिनं दिवो मया।
नाददात् तदपि दर्पमाश्रित-
स्तत्प्रसूनमपि हन्त कर्हिचित् ॥ ५१ ॥

सर्व्वलोकहृदयाधिवासिनो
वासुदेव ! विदितं तवाखिलम् ।
मन्यसे तदपि याचितं हितं
ज्ञायते न हृदयं कदापि ते ॥ ५२ ॥

निर्भरैर्भुजभुजङ्गविक्रमै-
राक्रमाय जगतामपि प्रभुः ।
लाघवोऽपि यदि याचते परं
क्व प्रयातु तदयाचितव्रतम् ॥ ५३ ॥

'प्रार्थितोऽपि मघवान् मया पुनः
कर्हिचिद्विजतरुं न दास्यति ।
गम्यते तदपि देव ! न प्रभो-
र्जल्पितं समुचितं हि लङ्घितुम् ॥ ५४ ॥

